अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ १.१ ॥

एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात् ।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते ॥ १.२ ॥

अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः ।
जन्मादयो विकाराः षड्भावभेदस्य योनयः ॥ १.३ ॥

एकस्य सर्वबीजस्य यस्य चेयमनेकधा ।
भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः ॥ १.४ ॥

प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः ।
एकोऽप्यनेकवर्त्मेव समाम्नातः पृथक्पृथक् ॥ १.५ ॥

भेदानां बहुमार्गत्वं कर्मण्येकत्र चाङ्गता ।
शब्दानां यतशक्तित्वं तस्य शाखासु दृश्यते ॥ १.६ ॥

स्मृतयो बहुरूपाश्च दृष्टादृष्टप्रयोजनाः ।
तमेवाश्रित्य लिङ्गेभ्यो वेदविद्भिः प्रकल्पिताः ॥ १.७ ॥

तस्यार्थवादरूपाणि निश्रित्य स्वविकल्पजाः ।
एकत्विनां द्वैतिनां च प्रवादा बहुधा मताः ॥ १.८ ॥

सत्या विसुद्धिस्तत्रोक्ता विद्यैवेकपदागमा ।
युक्ता प्रणवरूपेण सर्ववादाविरोधिना ॥ १.९ ॥

विधातुस्तस्य लोकानां अङ्गोपाङ्गनिबन्धनाः ।
विद्याभेदाः प्रतायन्ते ज्नानसंस्कारहेतवः ॥ १.१० ॥

आसन्नं ब्रह्मणस्तस्य तपसां उत्तमं तपः ।
प्रथमं छन्दसां अङ्गं आहुर्व्याकरणं बुधाः ॥ १.११ ॥

प्राप्तरूपविभागाया यो वाचः परमो रसः ।
यत्तत्पुण्यतमं ज्योतिस्तस्य मार्गोऽयं आन्जससः ॥ १.१२ ॥

अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् ।
तत्त्वावबोद्जः शब्दानं नास्ति व्याकरणादृते ॥ १.१३ ॥

तद्द्वारं अपवर्गस्य वाङ्मलानां चिकित्सितम् ।
पवित्रं सर्वविद्यानां अधिविद्यं प्रकासते ॥ १.१४ ॥

यथार्थजातयः सर्वाः सबाकृतिनिबन्धनाः ।
तथैव लोके विद्यानां एसा विद्या परायनम् ॥ १.१५ ॥

इदं आद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानां अजिह्मा राजपद्धतिः ॥ १.१६ ॥

अत्रातीतविपर्यासः केवलां अनुपस्यति ।

छन्दस्यस्छन्दसां योनिं आत्मा छन्दोमयीं तनुम् ॥ १.१७ ॥

प्रत्यस्थमितभेदाया यद्वाचो रूपं उत्तमम् ।
यदस्मिन्नेव तमसि ज्योतिः सुद्धं विवर्तते ॥ १.१८ ॥

वैकृतं समति क्रान्ता मूर्तिव्यापारदर्शनम् ।
व्यतीत्यालोकतमसी प्रकाशं यं उपासते ॥ १.१९ ॥

यत्र वाचो निमेत्तानि चिह्नानीवाक्षरस्मृतेः ।
शब्दपूर्वेण योगेन भासन्ते प्रतिबिम्बवत् ॥ १.२० ॥

अथर्वणां अङ्गिरसां सांनां ऋग्यजुषस्य च ।
यस्मिन्नुच्चावचा वर्णाः पृथक्स्थितपरिग्रहाः ॥ १.२१ ॥

यदेकं प्रक्रियाभेदैर्बहुधा प्रविभज्यते ।
तद्व्याकरणं आगम्य परं ब्रह्माधिगम्यते ॥ १.२२ ॥

नित्याः शब्दार्थसंबन्धास्तत्राम्नाता महर्षिभिः ।
सूत्राणां सानुतन्त्राणां भाष्याणां च प्रणेतृभिः ॥ १.२३ ॥

अपोद्धारपदार्थाः ये ये चार्थाः स्थितलक्षणाः ।
अन्वाख्येयाश्च ये शब्दा ये चापि प्रतिपादकाः ॥ १.२४ ॥

कार्यकारणभावेन योग्यभावेन च स्थिताः ।
धर्मे ये प्रत्यये चाङ्गं संबन्धाः साध्वसाधुषु ॥ १.२५ ॥

ते लिङ्गैश्च स्वशब्दैश्च शास्त्रेऽस्मिन्नुपवर्णिताः ।
स्मृत्यर्थं अनुगम्यन्ते के चिदेव यथागमम् ॥ १.२६ ॥

शिष्टेभ्य आगमात्सिद्धाः साधवो धर्मसाधनम् ।
अर्थप्रत्यायनाभेदे विपरीतास्त्वसाधवः ॥ १.२७ ॥

नित्यत्वे कृतकत्वे वा तेषां आदिर्न विद्यते ।
प्राणिनां इव सा चैषा व्यवस्थानित्यतोच्यते ॥ १.२८ ॥

नानर्थिकां इमां कश्चिद्व्यवस्थां कर्तुं अर्हति ।
तस्मान्निबध्यते शिष्टैः साधुत्वविषया स्मृतिः ॥ १.२९ ॥

न चागमादृते धर्मस्तर्केण व्यवतिष्ठते ।
ऋषीणां अपि यज्ज्ञानं तदप्यागमपूर्वकम् ॥ १.३० ॥

धर्मस्य चाव्यवच्छिन्नाः पन्थानो ये व्यवस्थिताः ।
न तांल्लोकप्रसिद्धत्वात्कश्चित्तर्केण बाधते ॥ १.३१ ॥

अवस्थादेशकालानां भेदाद्भिन्नासु शक्तिषु ।
भावानां अनुमानेन प्रसिद्धिरतिदुर्लभा ॥ १.३२ ॥

निर्ज्ञातशक्तेर्द्रव्यस्य तां तानर्थक्रियां प्रति ।
विशिष्टद्रव्यसंबन्धे सा शक्तिः प्रतिबध्यते ॥ १.३३ ॥

यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥ १.३४ ॥

परेषां असमाख्येयं अभ्यासादेव जायते ।
मणिरूप्यादिविज्ञानं तद्विदां नानुमानिकम् ॥ १.३५ ॥

प्रत्यक्षं अनुमानं च व्यतिक्रम्य व्यवस्थिताः ।
पितृरक्षःपिशाचानां कर्मजा एव सिद्धयः ॥ १.३६ ॥

आविर्भूतप्रकाशानां अनुपप्लुतचेतसाम् ।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥ १.३७ ॥

अतीन्द्रियानसंवेद्यान्पश्यन्त्यार्षेण चक्षुषा ।
ये भावान्वचनं तेषां नानुमानेन बाधते ॥ १.३८ ॥

यो यस्य स्वं इव ज्ञानं दर्शनं नातिशङ्कते ।
स्थितं प्रत्यक्षपक्षे तं कथं अन्यो निवर्तयेत् ॥ १.३९ ॥

इदं पुण्यं इदं पापं इत्येतस्मिन्पदद्वये ।
आचण्डालमनुष्याणां अल्पं शास्त्रप्रयोजनम् ॥ १.४० ॥

चैतन्यं इव यश्चायं अविच्छेदेन वर्तते ।
आगमस्तं उपासीनो हेतुवादैर्न बाध्यते ॥ १.४१ ॥

हस्तस्पर्शादिवान्धेन विषमे पथि धावता ।
अनुमानप्रधानेन विनिपातो न दुर्लभः ॥ १.४२ ॥

तस्मादकृतकं शास्त्रं स्मृतिं च सनिबन्धनाम् ।
आश्रित्यारभ्यते शिष्टैः साधुत्वविषया स्मृतिः ॥ १.४३ ॥

द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः ।
एको निमित्तं शब्दानां अपरोऽर्थे प्रयुज्यते ॥ १.४४ ॥

अविभक्तो विभक्तेभ्यो जायतेऽर्थस्य वाचकः ।
शब्दस्तत्रार्थरूपात्मा संबन्धं उपगच्छति ॥ १.४५ ॥

आत्मभेदं तयोः के चिदस्तीत्याहुः पुराणगाः ।
बुद्धिभेदादभिन्नस्य भेदं एके प्रचक्षते ॥ १.४६ ॥

अरणिस्थं यथा ज्योतिः प्रकाशान्तरकारणम् ।
तद्वच्छब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक् ॥ १.४७ ॥

वितर्कितः पुरा बुद्ध्या क्व चिदर्थे निवेशितः ।
करणेभ्यो विवृत्तेन ध्वनिना सोऽनुगृह्यते ॥ १.४८ ॥

नादस्य क्रमजातत्वान्न पूर्वो न परश्च सः ।
अक्रमः क्रमरूपेण भेदवानिव जायते ॥ १.४९ ॥

प्रतिबिम्बं यथान्यत्र स्थितं तोयक्रियावशात् ।
तत्प्रवृत्तिं इवान्वेति स धर्मः स्फोटनादयोः ॥ १.५० ॥

आत्मरूपं यथा ज्ञाने ज्ञेयरूपं च दृश्यते ।
अर्थरूपं तथा शब्दे स्वरूपं च प्रकाशते ॥ १.५१ ॥

आण्डभावं इवापन्नो यः क्रतुः शब्दसंज्ञकः ।
वृत्तिस्तस्य क्रियारूपा भागशो भजते क्रमम् ॥ १.५२ ॥

यथैकबुद्धिविषया मूर्तिराक्रियते पटे ।
मूर्त्यन्तरस्य त्रितयं एवं शब्देऽपि दृश्यते ॥ १.५३ ॥

यथा प्रयोक्तुः प्राग्बुद्धिः शब्देष्वेव प्रवर्तते ।
व्यवसायो ग्रहीतॄणां एवं तेष्वेव जायते ॥ १.५४ ॥

अर्थोपसर्जनीभूतानभिधेयेषु केषु चित् ।
चरितार्थान्परार्थत्वान्न लोकः प्रतिपद्यते ॥ १.५५ ॥

ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा ।
तथैव सर्वशब्दानां एते पृथगवस्थिते ॥ १.५६ ॥

विषयत्वं अनापन्नैः शब्दैर्नार्थः प्रकाश्यते ।
न सत्तयैव तेऽर्थानां अगृहीताः प्रकाशकाः ॥ १.५७ ॥

अतोऽनिर्ज्ञातरूपत्वात्किं आहेत्यभिधीयते ।
नेन्द्रियाणां प्रकाश्येऽर्थे स्वरूपं गृह्यते तथा ॥ १.५८ ॥

भेदेनावगृहीतौ द्वौ शब्दधर्मावपोद्धृतौ ।
भेदकारेषु हेतुत्वं अविरोधेन गच्छतः ॥ १.५९ ॥

वृद्ध्यादयो यथा शब्दाः स्वरूपोपनिबन्धनाः ।
आदैच्प्रत्यायितैः शब्दैः संबन्धं यान्ति संज्ञिभिः ॥ १.६० ॥

अग्निशब्दस्तथैवायं अग्निशब्दनिबन्धनः ।
अग्निश्रुत्यैति संबन्धं अग्निशब्दाभिधेयया ॥ १.६१ ॥

यो य उच्चार्यते शब्दो नियतं न स कार्यभाक् ।
अन्यप्रत्यायने शक्तिर्न तस्य प्रतिबध्यते ॥ १.६२ ॥

उच्चरन्परतन्त्रत्वाद्गुणः कार्यैर्न युज्यते ।
तस्मात्तदर्थैः कार्याणां संबन्धः परिकल्प्यते ॥ १.६३ ॥

सामान्यं आश्रितं यद्यदुपमानोपमेययोः ।
तस्य तस्योपमानेषु धर्मोऽन्यो व्यतिरिच्यते ॥ १.६४ ॥

गुणः प्रकर्षहेतुर्यः स्वातन्त्र्येणोपदिश्यते ।
तस्याश्रिताद्गुणादेव प्रकृष्टत्वं प्रतीयते ॥ १.६५ ॥

तस्याभिधेयभावेन यः शब्दः समवस्थितः ।

तसाप्युच्चारणे रूपं अन्यत्तस्माद्विविच्यते ॥ १.६६ ॥

प्राक्सम्ज्ञिनाभिसंबन्धात्संज्ञा रूपपदार्थिका ।
षष्ट्याश्च प्रथमायाश्च निमित्तत्वाय कल्पते ॥ १.६७ ॥

तत्रार्थवत्त्वात्प्रथमा संज्ञाशब्दाद्विधीयते ।
अस्येते व्यतिरेकश्च तदर्थादेव जायते ॥ १.६८ ॥

स्वं रूपं इति कैश्चित्तु व्यक्तिः संज्ञोपदिश्यते ।
जातेः कार्याणि संसृष्टा जातिस्तु प्रतिपद्यते ॥ १.६९ ॥

संज्ञिनीं व्यक्तिं इच्छन्ति सूत्रे ग्राह्यां अथापरे ।
जातिप्रत्यायिता व्यक्तिः प्रदेशेषूपतिष्ठते ॥ १.७० ॥

कार्यत्वे नित्यतायां वा के चिदेकत्ववादिनः ।
कार्यत्वे नित्यतायां वा के चिन्नानात्ववादिनः ॥ १.७१ ॥

पदभेदेऽपि वर्णानां एकत्वं न निवर्तते ।
वाक्येषु पदं एकं च भिन्नेष्वप्युपलभ्यते ॥ १.७२ ॥

न वर्णव्यतिरेकेण पदं अन्यच्च विद्यते ।
वाक्यं वर्णपदाभ्यां च प्रविभागो न कश्चन ॥ १.७३ ॥

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ।
वाक्यात्पदानां अत्यन्तं प्रविभागो न कश्चन ॥ १.७४ ॥

भिन्नदर्शनं आश्रित्य व्यवहारोऽनुगम्यते ।
तत्र यन्मुख्यं एकेषां तत्रान्येषां विपर्ययः ॥ १.७५ ॥

स्फोतस्याभिन्नकालस्य ध्वनिकालानुपातिनः ।
ग्रहणोपाधिभेदेन वृत्तिभेदं प्रचक्षते ॥ १.७६ ॥

स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु ।
प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते ॥ १.७७ ॥

शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।
स्थितिभेदनिमित्तत्वं वैकृतः प्रतिपद्यते ॥ १.७८ ॥

शब्दस्योर्ध्वं अभिव्यक्तेर्वृत्तिभेदं तु वैकृतः ।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥ १.७९ ॥

इन्द्रियस्यैवसंस्कारः शब्दस्यैवोभवस्य वा ।
क्रियते ध्वनिभिर्वादास्त्रयोऽभिव्यक्तिवादिनाम् ॥ १.८० ॥

इन्द्रियस्यैव संस्कारः समाधानाञ्जनादिभिः ।
विषयस्य तु संस्कारः तद्गन्धप्रतिपत्तये ॥ १.८१ ॥

चक्षुषः प्राप्यकारित्वे तेजसा तु द्वयोरपि ।
विषयेन्द्रिययोरिष्टा संस्कारः स क्रमो ध्वनेः ॥ १.८२ ॥

स्फोटरूपाविभागेन ध्वनेर्ग्रहणं इष्यते ।
कैश्चित्ध्वनिरसंवेद्यः स्वतन्त्रोऽन्यैः प्रकल्पितः ॥ १.८३ ॥

यथानुवाकः श्लोको वा सोढत्वं उपगच्छते ।
आवृत्त्या न तु स ग्रन्थः प्रत्यावृत्ति निरूप्यते ॥ १.८४ ॥

प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा ।
ध्वनिप्रकाशिते शब्दे स्वरूपं अवधार्यते ॥ १.८५ ॥

नादैराहितबीजायां अन्त्येन ध्वनिना सह ।
आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते ॥ १.८६ ॥

असतश्चान्तराले याञ् छब्दानस्तीति मन्यते ।
प्रतिपत्तुरशक्तिः सा ग्रहणोपाय एव सः ॥ १.८७ ॥

भेदानुकारो ज्ञानस्य वाचश्चोपप्लवो ध्रुवः ।
क्रमोपसृष्टरूपा वाग्ज्ञानं ज्ञेयव्यपाश्रयम् ॥ १.८८ ॥

- ज्ञेयेन न विना ज्ञानं व्यवहारेऽवतिष्ठते ।

नालब्धक्रमया वाचा कश्चिदर्थोऽभिधीयते ॥ १.८९ * ॥

यथाद्यसंख्याग्रहणं उपायः प्रतिपत्तये ।
संख्यान्तराणां भेदेऽपि तथा शब्दान्तरश्रुतिः ॥ १.९० ॥

प्रत्येकं व्यञ्जका भिन्न वर्णवाक्यपदेषु ये ।
तेषां अत्यन्तभेदेऽपि संकीर्णा इव शक्तयः ॥ १.९१ ॥

यथैव दर्शनैः पूर्वैर्दूरात्संतमसेऽपि वा ।
अन्यथाकृत्य विषयं अन्यथैवाध्यवस्यति ॥ १.९२ ॥

व्यज्यमाने तथा वाक्ये वाक्याभिव्यक्तिहेतुभिः ।
भागावग्रहरूपेण पूर्वं बुद्धिः प्रवर्तते ॥ १.९३ ॥

यथानुपूर्वीनियमो विकारे क्षीरबीजयोः ।
तथैव प्रतिपत्तॄणां नियतो बुद्धिषु क्रमः ॥ १.९४ ॥

भागवत्स्वपि तेष्वेव रूपभेदो ध्वनेः क्रमात् ।
निर्भागेष्वभ्युपायो वा भागभेदप्रकल्पनम् ॥ १.९५ ॥

अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता ।
कैश्चित्व्यक्तय एवास्य ध्वनित्वेन प्रकल्पिताः ॥ १.९६ ॥

अविकारस्य शब्दस्य निमित्तैर्विकृतो ध्वनिः ।
उपलब्धौ निमित्तत्वं उपयाति प्रकाशवत् ॥ १.९७ ॥

न चानित्येष्वभिव्यक्तिर्नियमेन व्यवस्थिता ।
आश्रयैरपि नित्यानां जातीनां व्यक्तिरिष्यते ॥ १.९८ ॥

देशादिभिश्च संबन्धो दृष्टः कायवतां अपि ।
देशभेदविकल्पेऽपि न भेदो ध्वनिशब्दयोः ॥ १.९९ ॥

ग्रहणग्राह्ययोः सिद्धा योग्यता नियता यथा ।
व्यङ्ग्यव्यञ्जकभावेऽपि तथैव स्फोटनादयोः ॥ १.१०० ॥

सदृशग्रहणानां च गन्धादीनां प्रकाशकम् ।
निमित्तं नियतं लोके प्रतिद्रव्यं अवस्थितम् ॥ १.१०१ ॥

प्रकाशकानां भेदांश्च प्रकाश्योऽर्थोऽनुवर्तते ।
तैलोदकादिभेदे तत्प्रत्यक्षं प्रतिबिम्बके ॥ १.१०२ ॥

विरुद्धपरिमाणेषु वज्रादर्शतलादिषु ।
पर्वतादिसरूपाणां भावानां नास्ति संभवः ॥ १.१०३ ॥

तस्मादभिन्नकालेषु वर्णवाक्यपदादिषु ।
वृत्तिकालः स्वकालश्च नादभेदाद्विभज्यते ॥ १.१०४ ॥

यः संयोगविभागाभ्यां करणैरुपजन्यते ।
स स्फोटः शब्दजाः शब्दा ध्वनयोऽन्यैरुदाहृताः ॥ १.१०५ ॥

अल्पे महति वा शब्दे स्फोटकालो न भिद्यते ।
परस्तु शब्दसंतानः प्रचयापचयात्मकः ॥ १.१०६ ॥

दूरात्प्रभेव दीपस्य ध्वनिमात्रं तु लक्ष्यते ।
घण्टादूनां च शब्देषु व्यक्तो भेदः स दृश्यते ॥ १.१०७ ॥

द्रव्याभिघातात्प्रचितौ भिन्नौ दीर्घप्लुतावपि ।
कम्पे तूपरते जाता नादा वृत्तेर्विशेषकाः ॥ १.१०८ ॥

अनवस्थितकम्पेऽपि करणे ध्वनयोऽपरे ।
स्फोटादेवोपजायन्ते ज्वाला ज्वालान्तरादिव ॥ १.१०९ ॥

वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।
कैश्चिद्दर्शनभेदो हि प्रवादेष्वनवस्थितः ॥ १.११० ॥

- लब्धक्रियाः प्रयत्नेन वक्तुरिच्चानुवर्तिना ।

स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते ॥ १.१११ * ॥

- तस्य कारणसामर्थ्याद्वेगप्रचयधर्मणः ।

संनिपाताद्विभज्यन्ते सारवत्योऽपि मूर्तयः ॥ १.११२ * ॥

- अणवः सर्वशक्तित्वाद्भेदसंसर्गवृत्तयः ।

छायातपतमःशब्द- भावेन परिणामिनः ॥ १.११३ * ॥

- स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः ।

अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः ॥ १.११४ * ॥

- अथायं आन्तरो ज्ञाता सूक्ष्मवागात्मनि स्थितः ।

व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते ॥ १.११५ * ॥

- स मनोभावं आपद्य तेजसा पाकं आगतः ।

वायुं आविशति प्राणं अथासौ समुदीर्यते ॥ १.११६ * ॥

- अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः ।

तद्धर्मेण समाविष्टस्तेजसैव विवर्तते ॥ १.११७ * ॥

- विभजन्स्वात्मनो ग्रन्थीन् छ्रुतिरूपैः पृथग्विधैः ।

प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयते ॥ १.११८ * ॥

- आत्मा बुद्ध्या समर्थ्यार्थान्मनो युङ्क्ते विवक्षया ।

मनः कायाग्निं आहन्ति स प्रेरयति मारुतम् ॥ १.११९ * ॥

अजस्रवृत्तिर्यः शब्दः सूक्ष्मत्वान्नोपलभ्यते ।
व्यजनाद्वायुरिव स स्वनिमित्तात्प्रतीयते ॥ १.१२० ॥

तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता ।
विवर्तमाना स्थानिषु सैषा भेदं प्रपद्यते ॥ १.१२१ ॥

शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी ।
यन्नेत्रः प्रतिभात्मायं भेदरूपः प्रतायते ॥ १.१२२ ॥

शब्दादिभेदः शब्देन व्याख्यातो रूप्यते यतः ।
तस्मादर्थविधाः सर्वाः शब्दमात्रासु निश्रिताः ॥ १.१२३ ॥

(षड्गादिभेदः अ)
शब्दस्यपरिणामोऽयं इत्याम्नायविदो विदुः ।
छन्दोभ्य एव प्रथमं एतद्विश्वं प्रवर्तते ॥ १.१२४ ॥

विभज्य बहुधात्मानं स च्छन्दस्यः प्रजापतिः ।
छन्दोमयीभिर्मात्राभिर्बहुधैव विवेश तम् ॥ १.१२५ ॥

साध्वी वाग्भूयसी येषु पुरुषेषु व्यवस्थिता ।
अधिकं वर्तते तेषु पुण्यं रूपं प्रजापतेः ॥ १.१२६ ॥

प्राजापत्यं महत्तेजस्तत्पात्रैरिव संवृत्तम् ।
शरीरभेदे विदुषां स्वां योनिं उपधावति ॥ १.१२७ ॥

यदेतन्मण्डलं भास्वद्धाम चित्रस्य राधसः ।
तद्भावं अभिसंभूय विद्यायां प्रविलीयते ॥ १.१२८ ॥

इतिकर्तव्यता लोके सर्वा शब्दव्यपाश्रया ।

यां पूर्वाहितसंस्कारो बालोऽपि प्रतिपद्यते ॥ १.१२९ ॥

आद्यः कारणविन्यासः प्राणस्योर्ध्वं समीरणम् ।
स्थानानां अभिघातश्च न विना शब्दभावनाम् ॥ १.१३० ॥

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धं इव ज्ञानं सर्वं शब्देन भासते ॥ १.१३१ ॥

वाग्रूपता चेतुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥ १.१३२ ॥

सा सर्वविद्याशिल्पानां कलानां चोपबन्धनी ।
तद्वशादभिनिष्पन्नं सर्वं वस्तु विभज्यते ॥ १.१३३ ॥

सैषा संसारिणां संज्ञा बहिरन्तश्च वर्तते ।
तन्मात्रां अव्यतिक्रान्तं चैतन्यं सर्वजातिषु ॥ १.१३४ ॥

अर्थक्रियासु वाक्सर्वान्समीहयति देहिनः ।
तदुत्क्रान्तौ विसंज्ञोऽयं दृश्यते काष्टकुड्यवत् ॥ १.१३५ ॥

- भेदोद्ग्राहविवर्तेन लब्धाकारपरिग्रहा ।

आम्नाता सर्वविद्यासु वागेव प्रकृतिः परा ॥ १.१३६ * ॥

- एकत्वं अनतिक्रान्ता वाङ्नेत्रा वाङ्निबन्धनाः ।

पृथक्प्रत्यवभासन्ते वाग्विभागा गवादयः ॥ १.१३७ * ॥

- षड्द्वारं षडधिष्ठानां [षट्प्र]बोधां षडव्ययाम् ।

ते मृत्युं अतिवर्तन्ते ये वै वाचं उपासते ॥ १.१३८ * ॥

प्रविभागे यथा कर्ता तया कार्ये प्रवर्तते ।
अविभागे तथा सैव कार्यत्वेनावतिष्ठते ॥ १.१३९ ॥

- प्रविभज्यात्मनात्मानं सृष्ट्वा भावान्पृथग्विधान् ।

सर्वेश्वरः सर्वमयः स्वप्ने भोक्ता प्रवर्तते ॥ १.१४० * ॥

स्वमात्रा परमात्रा वा श्रुत्या प्रक्रम्यते यथा ।
तथैव रूढतां एति तया ह्यर्थो विधीयते ॥ १.१४१ ॥

अत्यन्तं अतथाभूते निमित्ते श्रुत्यपाश्रयात् ।
दृश्यतेऽलातचक्रादौ वस्त्वाकारनिरूपणा ॥ १.१४२ ॥

अपि प्रयोक्तुरात्मानं शब्दं अन्तरवस्थितम् ।
प्राहुर्महान्तं ऋषभं येन सायुज्यं इष्यते ॥ १.१४३ ॥

तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।
तस्य प्रवृत्तितत्त्वज्ञस्तद्ब्रह्मामृतं अश्नुते ॥ १.१४४ ॥

- प्राणवृत्तिं अतिक्रान्ते वाचस्तत्त्वे व्यवस्थितः ।

क्रमसंहारयोगेन संहृत्यात्मानं आत्मनि ॥ १.१४५ * ॥

- वाचः संस्कारं आधाय वाचं ज्ञाने निवेश्य च ।

विभज्य बन्धनान्यस्याः कृत्वा तां छिन्नबन्धनाम् ॥ १.१४६ * ॥

- ज्योतिरान्तरं आसाद्य च्छिन्नग्रन्थिपरिग्रहः ।

कारणज्योतिषैकत्वं छित्त्वा ग्रन्थीन्प्रवर्तते ॥ १.१४७ * ॥

न जात्वकर्तृकं कश्चिदागमं प्रतिपद्यते ।
बीजं सर्वागमापाये त्रय्येवातो व्यवस्थिता ॥ १.१४८ ॥

अस्तं यातेषु वादेषु कर्तृष्वन्येष्वसत्स्वपि ।
श्रुतिस्मृत्युदितं धर्मं लोको न व्यतिवर्तते ॥ १.१४९ ॥

ज्ञाने स्वाभाविके नार्थः शास्त्रैः कश्चन विद्यते ।
धर्मो ज्ञानस्य हेतुश्चेत्तस्याम्नायो निबन्धनम् ॥ १.१५० ॥

वेदशास्त्राविरोधी च तर्कश्चक्शुरपश्यताम् ।
रूपमात्राद्धि वाक्यार्थः केवलं नातितिष्ठति ॥ १.१५१ ॥

सतोऽविवक्षा पारार्थ्यं व्यक्तिरर्थस्य लैङ्गिकी ।
इति न्यायो बहुविधस्तर्केण प्रविभज्यते ॥ १.१५२ ॥

शब्दानां एव सा शक्तिस्तर्को यः पुरुषाश्रयः ।
स शब्दानुगतो न्यायोऽनागमेष्वनिबन्धनः ॥ १.१५३ ॥

- यदुदुम्बरवर्णानां घटीनां मण्डलं महत् ।

पीतं न गमयेत्स्वर्गं किं तत्क्रतुगतं नयेत् ॥ १.१५४ * ॥

रूपादयो यथा दृष्टाः पर्यर्थं यतशक्तयः ।
शब्दास्तथैव दृश्यन्ते विषापहरणादिषु ॥ १.१५५ ॥

यथैषां तत्र सामर्थ्यं धर्मेऽप्येवं प्रतीयताम् ।
साधूनां साधुभिस्तस्माद्वाच्यं अभ्युदयार्थिनाम् ॥ १.१५६ ॥

सर्वोऽदृष्टफलानर्थानागमात्प्रतिपद्यते ।
विपरीतं च सर्वत्र शक्यते वक्तुं आगमे ॥ १.१५७ ॥

साधुत्वज्ञानविषया सेयं व्याकरणस्मृतिः ।
अविच्छेदेन शिष्टानां इदं स्मृतिनिबन्धनम् ॥ १.१५८ ॥

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् ।
अनेकतीर्थभेदायास्त्रय्या वाचः परं परम् ॥ १.१५९ ॥

- गौरिव प्रक्षरत्येका रसं उत्तमशालिनी ।

दिव्यादिव्येन रूपेण भारती गौः शुचिस्मिता ॥ १.१६० * ॥

- एतयोरन्तरं पश्य सूक्ष्मयोः स्पन्दमानयोः ।

प्राणापानान्तरे नित्यं एका सर्वस्य तिष्ठति ॥ १.१६१ * ॥

- अन्या त्वप्रेर्यमाणैव विना प्राणेन वर्तते ।

जायते हि ततः प्राणो वाचं आप्याययन्पुनः ॥ १.१६२ * ॥

- प्राणेनाप्यायिता सैवं व्यवहारनिबन्धनी ।

सर्वस्योच्छवासं आसाद्य न वाग्वदति कर्हि चित् ॥ १.१६३ * ॥

- घोषिणी जातनिर्घोषा अघोषा च प्रवर्तते ।

तयोरपि च घोषिण्या निर्घोषैव गरीयसी ॥ १.१६४ * ॥

- स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा ।

वैखरी वाक्प्रयोक्तृणां प्राणवृत्तिनिबन्धना ॥ १.१६५ * ॥

- केवलं बुद्ध्युपादान- क्रमरूपानुपातिनी ।

प्राणवृत्तिं अतिक्रम्य मध्यमा वाक्प्रवर्तते ॥ १.१६६ * ॥

- अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा ।

स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ॥ १.१६७ * ॥

- पीयूषापूर्यमाणापि नित्यं आगन्तुभिर्मलैः ।

अन्त्या कलेव सोमस्य नात्यन्तं अभिधीयते ॥ १.१६८ * ॥

- यस्यां दृष्टस्वरूपायां अधिकारो निवर्तते ।

पुरुषे षोडशकले तां आहुरमृतां कलाम् ॥ १.१६९ * ॥

- प्राप्तोपरागरूपा सा विप्लवैरनुषङ्गिभिः ।

वैखरी सत्त्वमात्रेव गुणैर्न व्यवकीर्यते ॥ १.१७० * ॥

तद्विभागाविभागाभ्यां क्रियमाणां अवस्थितम् ।
स्वभावज्ञैस्तु भावानां दृश्यन्ते शब्दशक्तयः ॥ १.१७१ ॥

अनादिं अव्यवच्छिन्नां श्रुतिं आहुरकर्तृकाम् ।
शिष्टैर्निबध्यमाना तु न व्यवच्छिद्यते स्मृतिः ॥ १.१७२ ॥

अविभागाद्विवृत्तानां अभिख्या स्वप्नवच्छ्रुतौ ।
भावतत्त्वं तु विज्ञाय लिङ्गेभ्यो विहिता स्मृतिः ॥ १.१७३ ॥

कायवाग्बुद्धिविषया ये मलाः समवस्थिताः ।
चिकित्सालक्षणाध्यात्म- शास्त्रैस्तेषां विशुद्धयः ॥ १.१७४ ॥

शब्दः संस्कारहीनो यो गौरिति प्रयुयुक्ष्यते ।
तं अपभ्रंशं इच्छन्ति विशिष्टार्थनिवेशिनम् ॥ १.१७५ ॥

अस्वगोण्यादयः शब्दाः साधवो विषयान्तरे ।
निमित्तभेदात्सर्वत्र साधुत्वं च व्यवस्थितम् ॥ १.१७६ ॥

ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः ।
तादात्म्यं उपगम्येव शब्दार्थस्य प्रकाशकाः ॥ १.१७७ ॥

न शिष्टैरनुगम्यन्ते पर्याया इव साधवः ।
ते यतः स्मृतिशास्त्रेण तस्मात्साक्षादवाचकाः ॥ १.१७८ ॥

अंब्वंब्विति यथा बालः शिक्षमाणोऽपभाषते ।
अव्यक्तं तद्विदां तेन व्यक्तौ भवति निश्चयः ॥ १.१७९ ॥

एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते ।
तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते ॥ १.१८० ॥

पारंपर्यादपभ्रंशा विगुणेष्वभिधातृषु ।
प्रसिद्धिं आगता येन तेषां साधुरवाचकः ॥ १.१८१ ॥

दैवी वाग्व्यतिकीर्णेयं अशक्तैरभिधातृभिः ।
अनित्यदर्शिनां त्वस्मिन्वादे बुद्धिविपर्ययः ॥ १.१८२ ॥

उभयेषां अविच्छेदादन्यशब्दविवक्षया ।
योऽन्यः प्रयुज्यते शब्दो न सोऽर्थस्याभिधायकः ॥ १.१८३ ॥

आख्यातं शब्दसंघातो जातिः संघातवर्तिनी ।
एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहृतिः ।।२.१ ।।
पदं आद्यं पृथक्सर्वं पदं सापेक्षं इत्यपि ।
वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायदर्शिनाम् ।।२.२ ।।
निघातादिव्यवस्थार्थं शास्त्रे यत्परिभाषितम् ।
साकाङ्क्षावयवं तेन न सर्वं तुल्यलक्षणम् ।।२.३ ।।
साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम् ।
कर्मप्रधानं गुणवदेकार्थं वाक्यं उच्यते ।।२.४ ।।
संबोधनपदं यच्च तत्क्रियाया विशेषकम् ।
तथा तिङन्तं तत्राहुस्तिङन्तस्य विशेषकम् ।।२.५ ।।
यथानेकं अपि क्त्वान्तं तिङन्तस्य विशेषकम् ।
तथा तिङन्तं तत्राहुस्तिङन्तस्य विशेषकम् ।।२.६ ।।
यथैक एव सर्वार्थ- प्रकाशः प्रविभज्यते ।
दृश्यभेदानुकारेण वाक्यार्थावगमस्तथा ।।२.७ ।।
चित्रस्यैकस्य रूपस्य यथा भेदनिदर्शनैः ।
नीलादिभिः समाख्यानं क्रियते भिन्नलक्षणैः ।।२.८ ।।
तथैवैकस्य वाक्यस्य निराकाङ्क्षस्य सर्वतः ।
शब्दान्तरैः समाख्यानं साकाङ्क्षैरनुगम्यते ।।२.९ ।।
यथा पदे विभज्यन्ते प्रकृतिप्रत्ययादयः ।
अपोद्धारस्तथा वाक्ये पदानां उपपद्यते ।।२.१० ।।
वर्णान्तरसरूपत्वं वर्णभागेषु दृष्यते ।
पदान्तरसरूपाश्च पदभागा इव स्थिताः ।।२.११ ।।
भागैरनर्थकैर्युक्ता वृषभोदकयावकाः ।
अन्वयव्यतिरेकौ तु व्यवहारनिबन्धनम् ।।२.१२ ।।
शब्दस्य न विभागोऽस्ति कुतोऽर्थस्य भविष्यति ।
विभागैः प्रक्रियाभेदं अविद्वान्प्रतिपद्यते ।।२.१३ ।।
ब्राह्मणार्थो यथा नास्ति कश्चिद्ब्राह्मणकम्बले ।
देवदत्तादयो वाक्ये थतैव स्युरनर्थकाः ।।२.१४ ।।
सामान्यार्थस्तिरोभूतो न विशेषेऽवतिष्ठते ।
उपात्तस्य कुतस्त्यागो निवृत्तः क्वावतिष्ठताम् ।।२.१५ ।।
अशाब्दो यदि वाक्यार्थः पदार्थोऽपि तथा भवेत् ।
एवं सति च संबन्धः शब्दस्यार्थेन हीयते ।।२.१६ ।।
विशेशशब्दाः केषां चित्सामान्यप्रतिरूपकाः ।
शब्दान्तराभिसंबन्धाद्व्यज्यन्ते प्रतिपत्तृषु ।।२.१७ ।।
तेषां तु कृत्स्नो वाक्यार्थः प्रतिभेदं समाप्यते ।
व्यक्तोपव्यञ्जना सिद्धिरर्थस्य प्रतिपतृषु ।।२.१८ ।।
स व्यक्तः क्रमवाञ् छब्द उपांशु यं अधीयते ।
अक्रमस्तु वितत्येव बुद्धिर्यत्रावतिष्ठते ।।२.१९ ।।
यथोत्क्षेपविशेषेऽपि कर्मभेदो न गृह्यते ।
आवृत्तौ व्यज्यते जातिः कर्मभिर्भ्रमणादिभिः ।।२.२० ।।
वर्णवाक्यपदेष्वेवं तुल्योपव्यञ्जना श्रुतिः ।
अत्यन्तभेदे तत्त्वस्य सरूपेव प्रतीयते ।।२.२१ ।।
नित्येषु च कुतः पूर्वं परं वा परमार्थतः ।
एकस्यैव तु सा शक्तिर्यदेवं अवभासते ।।२.२२ ।।
चिरं क्षिप्रं इति ज्ञाने कालभेदादृते यथा ।
भिन्नकाले प्रकाशेते स धर्मो ह्रस्वदीर्घयोः ।।२.२३ ।।
न नित्यः क्रममात्राभिः कालो भेदं इहार्हति ।
व्यावर्तिनीनां मात्राणां अभावे कीदृशः क्रमः ।।२.२४ ।।
ताभ्यो या जायते बुद्धिरेका सा भागवर्जिता ।

सा हि स्वशक्त्या भिन्नेव क्रमप्रत्यवमर्शिनी ।। २.२५ ।।
क्रमोल्लेखानुषङ्गेण तस्यां यद्बीजं आहितम् ।
तत्त्वनानात्वयोस्तस्य निरुक्तिर्नावतिष्ठते ।। २.२६ ।।
भावनासमये त्वेतत्क्रमसामर्थ्यं अक्रमम् ।
व्यावृत्तभेदो येनार्थो भेदवानुपलभ्यते ।। २.२७ ।।
पदानि वाक्ये तान्येव वर्णास्ते च पदे यदि ।
वर्णेषु वर्णभागानां भेदः स्यात्परमाणुवत् ।। २.२८ ।।
भागानां अनुपश्लेषान्न वर्णो न पदं भवेत् ।
तेषां अव्यपदेश्यत्वात्किं अन्यद्व्यपदिश्यताम् ।। २.२९ ।।
यदन्तःशब्दतत्त्वं तु भागैरेकं प्रकाशितम् ।
तं आहुरपरे शब्दं तस्य वाक्ये तथैकताम् ।। २.३० ।।
अर्थभागैस्तथा तेषां अन्तरोऽर्थः प्रकाश्यते ।
एकस्यैवात्मनो भेदौ शब्दार्थावपृथक्स्थितौ ।। २.३१ ।।
प्रकाशकप्रकाश्यत्वं कार्यकारणरूपता ।
अन्तर्मात्रात्मनस्तस्य शब्दतत्त्वस्य सर्वदा ।। २.३२ ।।
तस्यैवास्तित्वनास्तित्वे सामर्थ्ये समवस्थिते ।
अक्रमे क्रमनिर्भासे व्यवहारनिबन्धने ।। २.३३ ।।
संप्रत्ययप्रमाणत्वात्पदार्थास्तित्वकल्पने ।
पदार्थाभ्युच्चये त्यागादानर्थक्यं प्रसज्यते ।। २.३४ ।।
राजशब्देन राजार्थो भिन्नरूपेण गम्यते ।
वृत्तावाख्यातसदृशं पदं अन्यत्प्रयुज्यते ।। २.३५ ।।
यथाश्वकर्ण इत्युक्ते विनैवाश्वेन गम्यते ।
कश्चिदेव विशिष्टोऽर्थः सर्वेषु प्रत्ययस्तथा ।। २.३६ ।।
वाक्येषु अर्थान्तरगतः सादृश्यपरिकल्पने ।
केषां चित्रूढिशब्दत्वं शास्त्र एवानुगम्यते ।। २.३७ ।।
उपादायापि ये हेयास्तानुपायान्प्रचक्षते ।
उपायानां च नियमो नावश्यं अवतिष्ठते ।। २.३८ ।।
अर्थं कथं चित्पुरुषः कश्चित्संप्रतिपद्यते ।
संसृष्टा वा विभक्ता चा भेदा वाक्यनिबन्धनाः ।। २.३९ ।।
सोऽयं इत्यभिसंबन्धो बुद्ध्या प्रक्रम्यते यदा ।
वाक्यार्थस्य तदैकोऽपि वर्णः प्रत्यायकः क्व चित् ।। २.४० ।।
केवलेन पदेनार्थो यावानेवाभिधीयते ।
वाक्यस्थं तावतोऽर्थस्य तदाहुरभिधायकम् ।। २.४१ ।।
संबन्धे सति यत्त्वन्यदाधिक्यं उपजायते ।
वाक्यार्तं एव तं प्राहुरनेकपदसंश्रयम् ।। २.४२ ।।
स त्वनेकपदस्थोऽपि प्रतिभेदं समाप्यते ।
जातिवत्समुदायेऽपि संख्यावत्कल्प्यतेऽपरैः ।। २.४३ ।।
सर्वभेदानुगुण्यं तु सामान्यं अपरे विदुः ।
तदर्थान्तरसंसर्गाद्भजते भेदरूपताम् ।। २.४४ ।।
भेदानाकाङ्क्षतस्तस्य या परिप्लवमामता ।
अवच्छिनत्ति संबन्धस्तां विशेषे निवेशयन् ।। २.४५ ।।
कार्यानुमेयः संबन्धो रूपं तस्य न विद्यते ।
असत्त्वभूतं अत्यन्तं अतस्तं प्रतिजानते ।। २.४६ ।।
नियतं साधने साध्यं क्रिया नियतसाधना ।
स संनिधानमात्रेण नियमः संप्रकाशते ।। २.४७ ।।
गुणभावेन साकाङ्क्षं तत्र नाम प्रवर्तते ।
साध्यत्वेन निमित्तानि क्रियापदं अपेक्षते ।। २.४८ ।।
सन्त एव विशेषा ये पदार्थेष्वविभाविताः ।
ते क्रमादनुगम्यन्ते न वाक्यं अभिधायकम् ।। २.४९ ।।

शब्दानां क्रममात्रे च नान्यः शब्दोऽस्ति वाचकः ।
क्रमो हि धर्मः कालस्य तेन वाक्यं न विद्यते । । २.५० । ।
ये च संभविनो भेदाः पदार्थेष्वविभाविताः ।
ते संनिधाने व्यज्यन्ते न तु वर्णेष्वयं क्रमः । । २.५१ । ।
वर्णानां च पदानां च क्रममात्रनिवेशिनी ।
पदाख्या वाक्यसंज्ञा च शब्दत्वं नेष्यते तयोः । । २.५२ । ।
समानेऽपि तु शब्दत्वे दृष्टः संप्रत्ययः पदात् ।
प्रतिवर्णं त्वसौ नास्ति पदस्यार्थं अतो विदुः । । २.५३ । ।
यथा सावयवा वर्णा विना वाच्येन केन चित् ।
अर्थवन्तः समुदिता वाक्यं अप्येवं इष्यते । । २.५४ । ।
अनर्थकान्यपायत्वात्पदार्थेनार्थवन्ति वा ।
क्रमेणोच्चरितान्याहुर्वाक्यार्थं भिन्नलक्षणम् । । २.५५ । ।
नित्यत्वे समुदायानां जातेर्वा परिकल्पने ।
एकस्यैकार्थतां आहुर्वाक्यस्याव्यभिचारिणीम् । । २.५६ । ।
अभेदपूर्वकाभेदाः कल्पिता वाक्यवादिभिः ।
भेदपूर्वानभेदांस्तु मन्यन्ते पददर्शिनः । । २.५७ । ।
पदप्रकृतिभावश्च वृत्तिभेदेन वर्ण्यते ।
पदानां संहिता योनिः संहिता वा पदाश्रया । । २.५८ । ।
पदाम्नायश्च यद्यन्यः संहिताया निदर्शकः ।
नित्यस्तत्र कथं कार्यं पदं लक्षणदर्शनात् । । २.५९ । ।
प्रतिवर्णं असंवेद्यः पदार्थप्रत्ययो यथा ।
पदेश्वेवं असंवेद्यं वाक्यार्थस्य निरूपणम् । । २.६० । ।
वाक्यार्थः संनिविशते पदेषु सहवृत्तिषु ।
यथा तथैव वर्णेषु पदार्थः सहवृत्तिषु । । २.६१ । ।
सूक्ष्मं ग्राह्यं यथान्येन संसृष्टं सह गृह्यते ।
वर्णोऽप्यन्येन वर्णेन संबद्धो वाचकस्तथा । । २.६२ । ।
पदस्योच्चारणादर्थो यथा कश्चिन्निरूप्यते ।
वर्णानां अपि सांनिध्यात्तथा सोऽर्थः प्रतीयते । । २.६३ । ।
प्राप्तस्य यस्य सामर्थ्यान्नियमार्था पुनः श्रुतिः ।
तेनात्यन्तं विशेषेण सामान्यं यदि बाध्यते । । २.६४ । ।
यजेतेति ततो द्रव्यं प्राप्तं सामर्थ्यलक्षणम् ।
व्रीहिश्रुत्या निवर्तेत न स्यात्प्रतिनिधिस्तथा । । २.६५ । ।
तस्माद्व्रीहित्वं अधिकं व्रीहिशब्दः प्रकल्पयेत् ।
द्रव्यत्वं अविरुद्धत्वात्प्राप्त्यर्थः सन्न बाधते । । २.६६ । ।
तेन चापि व्यवच्छिन्ने द्रव्यत्वे सहचारिणि ।
असंभवाद्विशेषाणां तत्रान्येषां अदर्शनम् । । २.६७ । ।
न च सामान्यवत्सर्वे क्रियाशब्देन लक्षिताः ।
विशेषा न हि सर्वेषां सतां शब्दोऽभिधायकः । । २.६८ । ।
शुक्लादयो गुणाः सन्तो यथा तत्राविवक्षिताः ।
तथाविवक्षा भेदानां द्रव्यत्वसहचारिणाम् । । २.६९ । ।
असंनिधौ प्रतिनिधिर्मा भून्नित्यस्य कर्मणः ।
काम्यस्य वा प्रवृत्तस्य लोप इत्युपपद्यते । । २.७० । ।
विशिष्टैव क्रिया येन वाक्यार्थः परिकल्प्यते ।
द्रव्याभावे प्रतिनिधौ तस्य तत्स्यात्क्रियान्तरम् । । २.७१ । ।
निर्ज्ञातार्थं पदं यच्च तदर्थे प्रतिपादिते ।
पिकादि यदविज्ञातं तत्किं इत्यनुयुज्यते । । २.७२ । ।
सामर्थ्यप्रापितं यच्च व्यक्त्यर्थं अनुषज्यते ।
श्रुतिरेवानुषङ्गेण बाधिका लिङ्गवाक्ययोः । । २.७३ । ।
अप्राप्तो यस्तु शुक्लादिः संनिधानेन गम्यते ।

स यत्नप्रापितो वाक्ये श्रुतिधर्मविलक्षणः ।। २.७४ ।।
अभिन्नं एव वाक्यं तु यद्यभिन्नार्थं इष्यते ।
तत्सर्वं श्रुतिभूतत्वान्न श्रुत्यैव विरोत्स्यते ।। २.७५ ।।
वाक्यानां समुदायश्च य एकार्थप्रसिद्धये ।
साकाङ्क्षावयवस्तत्र वाक्यार्थोऽपि न विद्यते ।। २.७६ ।।
प्रासङ्गिकं इदं कार्यं इदं तन्त्रेण लभ्यते ।
इदं आवृत्तिभेदाभ्यां अत्र बाधसमुच्चयौ ।। २.७७ ।।
ऊहोऽस्मिन्विषये न्याय्यः संबन्धोऽस्य न बाध्यते ।
सामान्यस्यातिदेशोऽयं विशेषोऽत्रातिदिश्यते ।। २.७८ ।।
अर्थित्वं अत्र सामर्थ्यं अस्मिन्नर्थो न भिद्यते ।
शास्त्रात्प्राप्ताधिकारोऽयं व्युदासोऽस्य क्रियान्तरे ।। २.७९ ।।
इयं श्रुत्या क्रमप्राप्तिरियं उच्चारणादिति ।
क्रमोऽयं अत्र बलवानस्मिंस्तु न विवक्षितः ।। २.८० ।।
इदं पराङ्गैः संबद्धं अङ्गानां अप्रयोजकम् ।
प्रयोजकं इदं तेषां अत्रेदं नान्तरीयकम् ।। २.८१ ।।
इदं प्रधानं शेषोऽयं विनियोगक्रमस्त्वयम् ।
साक्षादस्योपकारीदं इदं आराद्विशेषकम् ।। २.८२ ।।
शक्तिव्यापारभेदोऽस्मिन्फलं अत्र तु भिद्यते ।
संबन्धाज्जातभेदोऽयं भेदस्तत्राविवक्षितः ।। २.८३ ।।
प्रसज्यप्रतिषेधोऽयं पर्युदासोऽयं अत्र तु ।
इदं गौणं इदं मुख्यं व्यापीदं गुरु लघ्विदम् ।। २.८४ ।।
भेदेनाङ्गाङ्गिभावोऽस्य बहुभेदं विकल्प्यते ।
इदं नियम्यतेऽस्यात्र योग्यत्वं उपजायते ।। २.८५ ।।
अस्य वाक्यान्तरे दृष्टाल्लिङ्गाद्भेदोऽनुमीयते ।
अयं शब्दैरपोद्धृत्य पदार्थः प्रविभज्यते ।। २.८६ ।।
इति वाक्येषु ये धर्माः पदार्थोपनिबन्धनाः ।
सर्वे तेन प्रकल्पेरन्पदं चेत्स्यदवाचकम् ।। २.८७ ।।
अविभक्तेऽपि वाक्यार्थे शक्तिभेदादपोद्धृते ।
वाक्यान्तरविभागेन यथोक्तं न विरुध्यते ।। २.८८ ।।
यथैवैकस्य गन्धस्य भेदेन परिकल्पना ।
पुष्पादिषु तथा वाक्येऽप्यर्थभेदोऽभिधीयते ।। २.८९ ।।
गवये नरसिंहे वाप्येकज्ञानावृते यथा ।
भागं जात्यन्तरस्यैव सदृशं प्रतिपद्यते ।। २.९० ।।
अप्रसिद्धं तु यं भागं अदृष्टं अनुपश्यति ।
तावत्यसंविदं मूढः सर्वत्र प्रतिपद्यते ।। २.९१ ।।
तथा पिकादियोगेन वाक्येऽत्यन्तविलक्षणे ।
सदृशस्येव संज्ञानं असतोऽर्थस्य मन्यते ।। २.९२ ।।
एकस्य भागे सादृश्यं भागे भेदश्च लक्ष्यते ।
निर्भागस्य प्रकाशस्य निर्भागेणैव चेतसा ।। २.९३ ।।
तथैव भागे सादृश्यं भागे भेदोऽवसीयते ।
भागाभावेऽपि वाक्यानां अत्यन्तं भिन्नधर्मणाम् ।। २.९४ ।।
रूपनाशे पदानां स्यात्कथं चावधिकल्पना ।
अगृहीतावधौ शब्दे कथं चार्थो विविच्यते ।। २.९५ ।।
संसर्ग इव रूपाणां शब्देऽन्यत्र व्यवस्थितः ।
नानारूपेषु तद्रूपं तन्त्रेणापरं इष्यते ।। २.९६ ।।
तस्मिन्नभेदे भेदानां संसर्ग इव वर्तते ।
रूपं रूपान्तरात्तस्मादनन्यत्प्रविभज्यते ।। २.९७ ।।
शास्त्रे प्रत्यायकस्यापि क्वचिदेकत्वं आश्रितम् ।
प्रत्याय्येन क्वचिद्भेदो ग्रहणग्राह्ययोः स्थितः ।। २.९८ ।।

ऊ इत्यभेदं आश्रित्य यथासंख्यं प्रकल्पितम् ।
लृलुटोर्ग्रहणे भेदो ग्राह्याभ्यां परिकल्पितः । । २.९९ । ।
यस्येत्येतदणो रूपं संज्ञिनां अभिधायकम् ।
न हि प्रतीयमानेन ग्रहणस्यास्ति संभवः । । २.१०० । ।
ऊ इत्येतदभिन्नं च भिन्नवाक्यनिबन्धनम् ।
भेदेन ग्रहणं यस्य पररूपं इव द्वयोः । । २.१०१ । ।
प्लुतस्याङ्गविवृद्धिं च समाहारं अचोस्तथा ।
व्युदस्यता पुनर्भेदः शब्देष्वत्यन्तं आश्रितः । । २.१०२ । ।
अर्धर्चादिषु शब्देषु रूपभेदः क्रमाद्यथा ।
तन्त्रात्तथैकशब्दत्वे भिन्नानां श्रुतिरन्यथा । । २.१०३ । ।
संहिताविषये वर्णाः स्वरूपेणाविकारिणः ।
शब्दान्तरत्वं यान्तीव शक्त्यन्तरपरिग्रहात् । । २.१०४ । ।
इन्द्रियादिविकारेण दृष्टं ग्राह्येषु वस्तुषु ।
आत्मत्यागादृते भिन्नं ग्रहणं स क्रमः श्रुतौ । । २.१०५ । ।
अभिधानक्रियाभेदाच्छब्देष्वविकृतेष्वपि ।
रूपं अत्यन्तभेदेन तदेवैकं प्रकाशते । । २.१०६ । ।
ऋचो वा गीतिमात्रं वा साम द्रव्यान्तरं न तु ।
गीतिभेदात्तु गृह्यन्ते ता एव विकृता ऋचः । । २.१०७ । ।
उपायाच्छ्रुतिसंहारे भिन्नानां एकशेषिणाम् ।
तन्त्रेणोच्चारणे तेषां शास्त्रे साधुत्वं उच्यते । । २.१०८ । ।
परिगृह्य श्रुतिं चैकां रूपभेदवतां अपि ।
तन्त्रेणोच्चारणं कार्यं अन्यथा ते न साधवः । । २.१०९ । ।
सरूपाणां च वाक्यानां शास्त्रेणाप्रतिपादितम् ।
तन्त्रेणोच्चारणादेकं रूपं साधूपलभ्यते । । २.११० । ।
एकस्यानेकरूपत्वं नालिकादिपरिग्रहात् ।
यथा तथैव तन्त्रात्स्याद्बहूनां एकरूपता । । २.१११ । ।
यथा पदसरूपाणां वाक्यानां संभवः पृथक् ।
तथा वाक्यान्तराभावे स्यादेषां पृथगर्थता । । २.११२ । ।
अभिधेयः पदस्यार्थो वाक्यस्यार्थः प्रयोजनम् ।
यस्य तस्य न संबन्धो वाक्यानां उपपद्यते । । २.११३ । ।
तत्र क्रियापदान्येव व्यपेक्षन्ते परस्परम् ।
क्रियापदानुषक्तस्तु संबन्धोऽथ प्रतीयते । । २.११४ । ।
आवृत्तिरनुवादो वा पदार्थव्यक्तिकल्पने ।
प्रत्येकं तु समाप्तोऽर्थः सहभूतेषु वर्तते । । २.११५ । ।
अविकल्पितवाक्यार्थे विकल्पा भावनाश्रयाः ।
अत्राधिकरणे वादाः पूर्वेषां बहुधा मताः । । २.११६ । ।
अभ्यासात्प्रतिभाहेतुः सर्वः शब्दोऽपरैः स्मृतः ।
बालानां च तिरश्चां च यथार्थप्रतिपादने । । २.११७ । ।
अनागमश्च सोऽभ्यासः समयः कैश्चिदिष्यते ।
अनन्तरं इदं कार्यं अस्मादित्युपदर्शकः । । २.११८ । ।
अस्त्यर्थः सर्वशब्दानां इति प्रत्याय्यलक्षणम् ।
अपूर्वदेवतास्वर्गैः समं आहुर्गवादिषु । । २.११९ । ।
प्रयोगदर्शनाभ्यासादाकारावग्रहस्तु यः ।
न स शब्दस्य विषयः स हि यत्नान्तराश्रयः । । २.१२० । ।
के चिद्भेदाः प्रकाश्यन्ते शब्दैस्तदभिधायिभिः ।
अनुनिष्पादिनः कांश्चिच्छब्दार्थानिति मन्यते । । २.१२१ । ।
जातेः प्रत्यायके शब्दे या व्यक्तिरनुषङ्गिणी ।
न तद्व्यक्तिगतान्भेदाञ् जातिशब्दोऽवलम्बते । । २.१२२ । ।
घटादीनां न चाकारान्प्रत्याययति वाचकः ।

वस्तुमात्रनिवेशित्वात्तद्गतिर्नान्तरीयका । । २.१२३ । ।
क्रिया विना प्रयोगेण न दृष्टा शब्दचोदिता ।
प्रयोगस्त्वनुनिष्पादी शब्दार्थ इति गम्यते । । २.१२४ । ।
नियतास्तु प्रयोगा ये नियतं यच्च साधनम् ।
तेषां शब्दाभिधेयत्वं अपरैरनुगम्यते । । २.१२५ । ।
समुदायोऽभिधेयो वाप्यविकल्पसमुच्चयः ।
असत्यो वापि संसर्गः शब्दार्थः कैश्चिदिष्यते । । २.१२६ । ।
असत्योपाधि यत्सत्यं तद्वा शब्दनिबन्धनाम् ।
शब्दो वाप्यभिजल्पत्वं आगतो याति वाच्यताम् । । २.१२७ । ।
सोऽयं इत्यभिसंबन्धाद्रूपं एकीकृतं यता ।
शब्दस्यार्थेन तं शब्दं अभिजल्पं प्रचक्षते । । २.१२८ । ।
तयोरपृथगात्मत्वे रूढिरव्यभिचारिणी ।
किं चिदेव क्व चिद्रूपं प्राधान्येनावतिष्ठते । । २.१२९ । ।
लोकेऽर्थरूपतां शब्दः प्रतिपन्नः प्रवर्तते ।
शास्त्रे तूभयरूपत्वं प्रविभक्तं विवक्षया । । २.१३० । ।
अशक्तेः सर्वशक्तेर्वा शब्दैरेव प्रकल्पिता ।
एकस्यार्थस्य नियता क्रियादिपरिकल्पना । । २.१३१ । ।
यो वार्थो बुद्धिविषयो बाह्यवस्तुनिबन्धनः ।
स बाह्यं वस्त्विवति ज्ञातः शब्दार्थ इति गम्यते । । २.१३२ । ।
आकारवन्तः संवेद्या व्यक्तिस्मृतिनिबन्धनाः ।
एते प्रत्यवभासन्ते संविनंआत्रं त्वतोऽन्यथा । । २.१३३ । ।
यथेन्द्रियं संनिपतद्वैचित्रेणोपदर्शकम् ।
तथैव शब्दादर्थस्य प्रतिपत्तिरनेकधा । । २.१३४ । ।
वक्त्रान्यथैव प्रक्रान्तो भिन्नेषु प्रतिपत्तृषु ।
स्वप्रत्ययानुकारेण शब्दार्थः प्रविभज्यते । । २.१३५ । ।
एकस्मिन्नपि दृश्येऽर्थे दर्शनं भिद्यते पृथक् ।
कालान्तरेण चैकोऽपि तं पश्यत्यन्यथा पुनः । । २.१३६ । ।
एकस्यापि च शब्दस्य निमित्तैरव्यवस्थितैः ।
एकेन बहुभिश्चार्थो बहुधा परिकल्प्यते । । २.१३७ । ।
तस्माददृष्टतत्त्वानां सापराधं बहुच्छलम् ।
दर्शनं वचनं वापि नित्यं एवानवस्थितम् । । २.१३८ । ।
ऋषीणां दर्शनं यच्च तत्त्वे किं चिदवस्थितम् ।
न तेन व्यवहारोऽस्ति न तच्छब्दनिबन्धनम् । । २.१३९ । ।
तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव ।
नैव चास्ति तलं व्योम्नि न खद्योते हुताशनः । । २.१४० । ।
तस्मात्प्रत्यक्षं अप्यर्थं विद्वानीक्षेत युक्तितः ।
न दर्शनस्य प्रामाण्याद्दृश्यं अर्थं प्रकल्पयेत् । । २.१४१ । ।
असमाख्येयतत्त्वानां अर्थानां लौकिकैर्यथा ।
व्यवहारे समाख्यानं तत्प्रज्ञो न विकल्पयेत् । । २.१४२ । ।
विच्छेदग्रहणेऽर्थानां प्रतिभान्यैव जायते ।
वाक्यार्थ इति तां आहुः पदार्थैरुपपादिताम् । । २.१४३ । ।
इदं तदिति सान्येषां अनाक्येया कथं चन ।
प्रत्यात्मवृत्ति सिद्धा सा कर्त्रापि न निरूप्यते । । २.१४४ । ।
उपश्लेषं इवार्थानां सा करोत्यविचारिता ।
सार्वरूप्यं इवापन्ना विषयत्वेन वर्तते । । २.१४५ । ।
साक्शाच्छब्देन जनितां भावनानुगमेन वा ।
इतिकर्तव्यतायां तां न कश्चिदतिवर्तते । । २.१४६ । ।
प्रमाणत्वेन तां लोकः सर्वः समनुगच्छति ।
समारम्भाः प्रतायन्ते तिरश्चां अपि तद्वशात् । । २.१४७ । ।

यथा द्रव्यविशेषाणां परिपाकैरयत्नजाः ।
मदादिशक्तयो दृष्टाः प्रतिभास्तद्वतां तथा ।। २.१४८ ।।
स्वरवृत्तिं विकुरुते मधौ पुंस्कोकिलस्य कः ।
जन्त्वादयः कुलायादि- करणे शिक्षिताः कथम् ।। २.१४९ ।।
आहारप्रीत्यपद्वेष- प्लवनादिक्रियासु कः ।
जात्यन्वयप्रसिद्धासु प्रयोक्ता मृगपक्षिणाम् ।। २.१५० ।।
भावनानुगतादेतदागमादेव जायते ।
आसत्तिविप्रकर्षाभ्यां आगमस्तु विशिष्यते ।। २.१५१ ।।
स्वभाववरणाभास- योगादृष्टोपपादिताम् ।
विशिष्टोपहितां चेति प्रतिभां षड्विधां विदुः ।। २.१५२ ।।
यथा संयोगिभिर्द्रव्यैर्लक्षितेऽर्थे प्रयुज्यते ।
गोशब्दो न त्वसौ तेषां विशेशाणां प्रकाशकः ।। २.१५३ ।।
आकारवर्णावयवैः संसृष्टेषु गवादिषु ।
शब्दः प्रवर्तमानोऽपि न तानङ्गीकरोत्यसौ ।। २.१५४ ।।
संस्थानवर्णावयवैर्विशिष्टेऽर्थे प्रयुज्यते ।
शब्दो न तस्यावयवे प्रवृत्तिरुपलभ्यते ।। २.१५५ ।।
दुर्लभं कस्य चिल्लोके सर्वावयवदर्शनम् ।
कैश्चित्त्ववयवैर्दृष्टैरर्थः कृत्सोऽनुमीयते ।। २.१५६ ।।
तथा जात्युत्पलादीनां गन्धेन सहचारिणाम् ।
नित्यसंबन्धिनां दृष्टं गुणानां अवधारणम् ।। २.१५७ ।।
संख्याप्रमाणसंस्थान- निरपेक्षः प्रवर्तते ।
बिन्दौ च समुदाये च वाचकः सलिलादिषु ।। २.१५८ ।।
संस्कारादिपरिच्छिन्ने तैलादौ यो व्यवस्थितः ।
आहैकदेशं तत्त्वेन तस्यावयववर्तिना ।। २.१५९ ।।
येनार्थेनाभिसंबद्धं अभिधानं प्रयुज्यते ।
तदर्थापगमे तस्य प्रयोगो विनिवर्तते ।। २.१६० ।।
यांस्तु संभविनो धर्मानन्तर्णीय प्रयुज्यते ।
शब्दस्तेषां न सांनिध्यं नियमेन व्यपेक्षते ।। २.१६१ ।।
यथा रोमशफादीनां व्यभिचारेऽपि दृश्यते ।
गोशब्दो न तथा जातेर्विप्रयोगे प्रवर्तते ।। २.१६२ ।।
तस्मात्संभविनोऽर्थस्य शब्दात्संप्रत्यये सति ।
अदृष्टविप्रयोगार्थः संबन्धित्वेन गम्यते ।। २.१६३ ।।
वाचिका द्योतिका व स्युर्द्वित्वादीनां विभक्तयः ।
स्याद्वा संख्यावतोऽर्थस्य समुदायोऽभिधायकः ।। २.१६४ ।।
विना संख्याभिधानाद्वा संख्याभेदसमन्वितान् ।
अर्थान्स्वरूपभेदेन काम्श्चिदाहुर्गवादयः ।। २.१६५ ।।
ये शब्दा नित्यसंबन्धा विवेके ज्ञातशक्तयः ।
अन्वयव्यतिरेकाभ्यां तेषां अर्थो विभज्यते ।। २.१६६ ।।
यावच्चाव्यभिचारेण तयोः शक्यं प्रकल्पनम् ।
नियमस्तत्र न त्वेवं नियमो नुट्शबादिषु ।। २.१६७ ।।
संभवे नाभिधानस्य लक्षणत्वं प्रकल्पते ।
आपेक्षिक्यो हि संसर्गे नियताः शब्दशक्तयः ।। २.१६८ ।।
न कूपसूपयूपानां अन्वयोऽर्थस्य दृश्यते ।
अतोऽर्थान्तरवाचित्वं संघातस्यैव गम्यते ।। २.१६९ ।।
अन्वाख्यानानि भिद्यन्ते शब्दव्युत्पत्तिकर्मसु ।
बहूनां संभवेऽर्थानां निमित्तं किं चिदिष्यते ।। २.१७० ।।
वैरवासिष्ठगिरिशास्तथैकागारिकादयः ।
कैश्चित्कथं चिदाख्याता निमित्तावधिसंकरैः ।। २.१७१ ।।
यथा पथः समाख्यानं वृक्षवल्मीकपर्वतैः ।

अविरुद्धं गवादीनां भिन्नैश्च सहचारिभिः ।। २.१७२ ।।
अन्यथा च समाख्यानं अवस्थाभेददर्शिभिः ।
क्रियते किंशुकादीनां एकदेशावधारणम् ।। २.१७३ ।।
कैश्चिन्निर्वचनं भिन्नं गिरतेर्गर्जतेर्गमेः ।
गवतेर्गदतेर्वापि गौरित्यत्रानुदर्शितम् ।। २.१७४ ।।
गौरित्येव स्वरूपाद्वा गोशब्दो गोषु वर्तते ।
व्युत्पाद्यते न वा सर्वं कैश्चिच्चोभयथेष्यते ।। २.१७५ ।।
सामान्येनोपदेशश्च शास्त्रे लघ्वर्थं आश्रितः ।
जात्यन्तरवदन्यस्य विशेषाः प्रतिपादकाः ।। २.१७६ ।।
अर्थान्तरे च यद्वृत्तं तत्प्रकृत्यन्तरं विदुः ।
तुल्यरूपं न तद्रूढावन्यस्मिन्ननुषज्यते ।। २.१७७ ।।
भिन्नाविजियजी धातू नियतौ विषयान्तरे ।
कैश्चित्कथं चिदुद्दिष्टौ चित्रं हि प्रतिपादनम् ।। २.१७८ ।।
एवं च वालवायादि जित्वरीवदुपाचरेत् ।
भेदाभेदाभ्युपगमे न विरोधोऽस्ति कश्चन ।। २.१७९ ।।
अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनम् ।
धातूपसर्गयोः शास्त्रे धातुरेव तु तादृशः ।। २.१८० ।।
तथा हि संग्रामयतेः सोपसर्गाद्विधिः स्मृतः ।
क्रियाविशेषाः सम्घाते प्रक्रम्यन्ते तथाविधाः ।। २.१८१ ।।
कार्याणां अन्तरङ्गत्वं एवं धातूपसर्गयोः ।
साधनैर्याति संबन्धं तथाभूतैव सा क्रिया ।। २.१८२ ।।
प्रयोगार्थेषु सिद्धः सन्भेत्तव्योऽर्थो विशिष्यते ।
प्राक्च साधनसंबन्धात्क्रिया नैवोपजायते ।। २.१८३ ।।
धातोः साधनयोगस्य भाविनः प्रक्रमाद्यथा ।
धातुत्वं कर्मभावश्च तथान्यदपि दृश्यताम् ।। २.१८४ ।।
बीजकालेषु संबन्धाद्यथा लाक्षारसादयः ।
वर्णादिपरिणामेन फलानां उपकुर्वते ।। २.१८५ ।।
बुद्धिस्थादभिसंबन्धात्तथा धातूपसर्गयोः ।
अभ्यन्तरीकृताद्भेदः पदकाले प्रकाशते ।। २.१८६ ।।
क्व चित्संभविनो भेदाः केवलैरनिदर्शिताः ।
उपसर्गेण संबन्धे व्यज्यन्ते प्रनिरादिना ।। २.१८७ ।।
स वाचको विशेषाणां संभवाद्द्योतकोऽपि वा ।
शक्त्याधानाय वा धातोः सहकारी प्रयुज्यते ।। २.१८८ ।।
स्थादिभिः केवलैर्यच्च गमनादि न गम्यते ।
तत्रानुमानाद्द्विविधात्तद्धर्मा प्रादिरुच्यते ।। २.१८९ ।।
अप्रयोगेऽधिपर्योश्च यावद्दृष्टं क्रियान्तरम् ।
तस्याभिधायको धातुः सह ताभ्यां अनर्थकः ।। २.१९० ।।
तथैव स्वार्थिकाः के चित्संघातान्तरवृत्तयः ।
अनर्थकेन संसृष्टाः प्रकृत्यर्थानुवादिनः ।। २.१९१ ।।
निपाता द्योतकाः के चित्पृथगर्थप्रकल्पने ।
आगमा इव के चित्तु संभूयार्थस्य साधकाः ।। २.१९२ ।।
उपरिष्टात्पुरस्ताद्वा द्योतकत्वं न भिद्यते ।
तेषु प्रयुज्यमानेषु भिन्नार्थेष्वपि सर्वथा ।। २.१९३ ।।
चादयो न प्रयुज्यन्ते पदत्वे सति केवलाः ।
प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते ।। २.१९४ ।।
समुच्चिताभिधाने तु व्यतिरेको न विद्यते ।
असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते ।। २.१९५ ।।
समुच्चिताभिधानेऽपि विशिष्टार्थाभिधायिनाम् ।
गुणैर्पदानां संबन्धः परतन्त्रास्तु चादयः ।। २.१९६ ।।

जनयित्वा क्रिया का चित्संबन्धं विनिवर्तते ।
श्रूयमाणे क्रियाशब्दे संबन्धो जायते क्व चित् । । २.१९७ । ।
तत्र षष्ठी प्रतिपदं समासस्य निवृत्तये ।
विहिता दर्शनार्थं तु कारकं प्रत्युदाहृतम् । । २.१९८ । ।
स चोपजातः संबन्धो विनिवृत्ते क्रियापदे ।
कर्मप्रवचनीयेन तत्र तत्र नियम्यते । । २.१९९ । ।
येन क्रियापदाक्षेपः स कारकविभक्तिभिः ।
युज्यते विर्यथा तस्य लिखावनुपसर्गता । । २.२०० । ।
तिष्ठतेरप्रयोगश्च दृष्टोऽप्रत्यजयन्निति ।
सुन्वभीत्याभिमुख्ये च केवलोऽपि प्रयुज्यते । । २.२०१ । ।
कर्मप्रवचनीयत्वं क्रियायोगे विधीयते ।
षत्वादिविनिवृत्त्यर्थं स्वत्यादीनां विधर्मणाम् । । २.२०२ । ।
हेतुहेतुमतोर्योग- परिच्छेदेऽनुना कृते ।
आरम्भाद्बाध्यते प्राप्ता तृतीया हेतुलक्षणा । । २.२०३ । ।
क्रियाया द्योतको नायं न संबन्धस्य वाचकः ।
नापि क्रियापदाक्षेपि संबन्धस्य तु भेदकः । । २.२०४ । ।
अनर्थकानां संघातः सार्थकोऽनर्थकस्तथा ।
वर्णानां पदं अर्थेन युक्तं नावयवाः पदे । । २.२०५ । ।
पदानां अर्थयुक्तानां संघातो भिद्यते पुनः ।
अर्थान्तरावबोधेन संबन्धविगमेन च । । २.२०६ । ।
सार्थकानर्थकौ भेदे संबन्धं नाधिगच्छतः ।
अधिगच्छत इत्येके कुटीरादिनिदर्शनात् । । २.१०७ । ।
अर्थवद्भ्यो विशिष्टार्थः संघात उपजायते ।
नोपजायत इत्येके समासस्वार्थिकादिषु । । २.२०८ । ।
के चिद्धि युतसिद्धार्था भेदे निर्ज्ञातशक्तयः ।
अन्वयव्यतिरेकाभ्यां के चित्कल्पितशक्तयः । । २.२०९ । ।
शास्त्रार्थ एव वर्णानां अर्थवत्त्वे प्रदर्शितः ।
धात्वादीनां हि शुद्धानां लौकिकोऽर्थो न विद्यते । । २.२१० । ।
कृत्तद्धितानां अर्थश्च केवलानां अलौकिकः ।
प्राग्विभक्तेस्तदन्तस्य तथैवार्थो न विद्यते । । २.२११ । ।
अभिव्यक्ततरो योऽर्थः प्रत्ययान्तेषु लक्ष्यते ।
अर्थवत्ताप्रकरणादाश्रितः स तथाविधः । । २.२१२ । ।
आत्मभेदो न चेत्कश्चिद्वर्णेभ्यः पदवाक्ययोः ।
अन्योन्यापेक्षया शक्त्या वर्णः स्यादभिधायकः । । २.२१३ । ।
वर्णेन केन चिन्न्यूनः संघातो योऽभिधायकः ।
न चेच्छब्दान्तरं असावन्यूनस्तेन गम्यते । । २.२१४ । ।
स तस्मिन्वाचके शब्दे निमित्तात्स्मृतिं आदधत् ।
साक्षादिव व्यवहितं शब्देनार्थं उपोहते । । २.२१५ । ।
पदवाच्यो यथा नार्थः कश्चिद्गौरखरादिषु ।
सत्यपि प्रत्ययेऽत्यन्तं समुदाये न गम्यते । । २.२१६ । ।
समन्वित इवार्थात्मा पदार्थैर्यः प्रतीयते ।
पदार्थदर्शनं तत्र तथैवानुपकारकम् । । २.२१७ । ।
समुदायावयवयोर्भिन्नार्थत्वे च वृत्तिषु ।
युगपद्भेदसंसर्गौ विरुद्धावनुषङ्गिणौ । । २.२१८ । ।
कश्च साधनमात्रार्थानध्यादीन्परिकल्पयेत् ।
अप्रयुक्तपदश्चार्थो बहुव्रीहौ कथं भवेत् । । २.२१९ । ।
प्रज्ञुसंज्वाद्यवयवैर्न चास्त्यर्थावधारणम् ।
तस्मात्संघात एवैको विशिष्टार्थनिबन्धनम् । । २.२२० । ।
गर्गा इत्येक एवायं बहुष्वर्थेषु वर्तते ।

द्वन्द्वसंज्ञोऽपि संघातो बहूनां अभिधायकः । । २.२२१ । ।
यथैकशेषे भुज्यादिः प्रत्येकं अवतिष्ठते ।
क्रियैवं द्वन्द्ववाच्येऽर्थे प्रत्येकं प्रविभज्यते । । २.२२२ । ।
यच्च द्वन्द्वपदार्थस्य तच्छब्देन व्यपेक्षणम् ।
सापि व्यावृत्तरूपेऽर्थे सर्वनामसरूपता । । २.२२३ । ।
यथा च खदिरच्छेदे भागेषु क्रमवांस्छिदिः ।
तथा द्वन्द्वपदार्थस्य भागेषु क्रमदर्शनम् । । २.२२४ । ।
सङ्घैकदेशे प्रक्रान्तान्यथा सङ्घानुपातिनः ।
क्रियाविशेषान्मन्यन्ते स द्वन्द्वावयवे क्रमः । । २.२२५ । ।
प्रतिपादयता वृत्तिं अबुद्धान्वाक्यपूर्विकाम् ।
वृत्तौ पदार्थभेदेन प्राधान्यं उपदर्शितम् । । २.२२६ । ।
अभेदादभिधेयस्य नञ्समासे विकल्पितम् ।
प्राधान्यं बहुधा भाष्ये दोषास्तु प्रक्रियागताः । । २.२२७ । ।
जहत्स्वार्थविकल्पे च सर्वार्थत्यागं इच्छता ।
बहुव्रीहिपदार्थस्य त्यागः सर्वस्य दर्शितः । । २.२२८ । ।
शास्त्रे क्व चित्प्रकृत्यर्थः प्रत्ययेनाभिधीयते ।
प्रकृतौ विनिवृत्तायां प्रत्ययार्थश्च धातुभिः । । २.२२९ । ।
यं अर्थं आहतुर्भिन्नौ प्रत्ययावेक एव तम् ।
क्व चिदाह पचन्तीति धातुस्ताभ्यां विना क्व चित् । । २.२३० । ।
अन्वाख्यानस्मृतेर्ये च प्रत्ययार्था निबन्धनम् ।
निर्दिष्टास्ते प्रकृत्यर्थाः स्मृत्यन्तर उदाहृताः । । २.२३१ । ।
प्रसिद्धेरुद्वमिकरीत्येवं शास्त्रेऽभिधीयते ।
व्यवहाराय मन्यन्ते शास्त्रार्थप्रक्रिया यतः । । २.२३२ । ।
शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते ।
अनागमविकल्पा तु स्वयं विद्योपवर्तते । । २.२३३ । ।
अनिबद्धं निमित्तेषु निरुपाख्यं फलं यथा ।
तथा विद्याप्यनाख्येया शास्त्रोपायेव लक्ष्यते । । २.२३४ । ।
यथाभ्यासं हि वागर्थे प्रतिपत्तिं समीहते ।
स्वभाव इव चानादिर्मिथ्याभ्यासो व्यवस्थितः । । २.२३५ । ।
उत्प्रेक्षते सावयवं परमाणुं अपण्डितः ।
तथावयविनं युक्तं अन्यैरवयवैः पुनः । । २.२३६ । ।
घटादिदर्शनाल्लोकः परिच्छिन्नोऽवसीयते ।
समारम्भाच्च भावानां आदिमद्ब्रह्म शाश्वतम् । । २.२३७ । ।
उपायाः शिक्षमाणानां बालानां उपलापनाः ।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते । । २.२३८ । ।
अन्यथा प्रतिपद्यार्थं पदग्रहणपूर्वकम् ।
पुनर्वाक्ये तं एवार्थं अन्यथा प्रतिपद्यते । । २.२३९ । ।
उपात्ता बहवोऽप्यर्था येष्वन्ते प्रतिषेधनम् ।
क्रियते ते निवर्तन्ते तस्मात्तांस्तत्र नाश्रयेत् । । २.२४० । ।
वृक्षो नास्तीति वाक्यं च विशिष्टाभावलक्षणम् ।
नार्थे न बुद्धौ संबन्धो निवृत्तेरवतिष्ठते । । २.२४१ । ।
विच्छेदप्रतिपत्तौ च यद्यस्तीत्यवधार्यते ।
अशब्दवाच्या सा बुद्धिर्निवर्त्येत स्थिता कथम् । । २.२४२ । ।
अथ यज्ज्ञानं उत्पन्नं तन्मिथ्येति नञा कृतम् ।
नञो व्यापारभेदेऽस्मिन्नभावावगतिः कथम् । । २.२४३ । ।
निराधारप्रवृत्तौ च प्राक्प्रवृत्तिर्नञो भवेत् ।
अथाधारः स एवास्य नियमार्था श्रुतिर्भवेत् । । २.२४४ । ।
नियमद्योतनार्था वाप्यनुवादो यथा भवेत् ।
कश्चिदेवार्थवांस्तत्र शब्दः शेषास्त्वनर्थकाः । । २.२४५ । ।

विरुद्धं चाभिसंबन्धं उदाहार्यादिभिः कृतम् ।
वाक्ये समाप्ते वाक्यार्थं अन्यथा प्रतिपद्यते ।। २.२४६ ।।
स्तुतिनिन्दाप्रधानेषु वाक्येष्वर्थो न तादृशः ।
पदानां प्रविभागेन यादृशः परिकल्प्यते ।। २.२४७ ।।
अथासंसृष्ट एवार्थः पदेषु समवस्थितः ।
वाक्यार्थस्याभ्युपायोऽसावेकस्य प्रतिपादने ।। २.२४८ ।।
पूर्वं पदेष्वसंसृष्टो यः क्रमादुपचीयते ।
छिन्नग्रथितकल्पत्वात्तद्विशिष्टतरं विदुः ।। २.२४९ ।।
एकं आहुरनेकार्थं शब्दं अन्ये परीक्षकाः ।
निमित्तभेदादेकस्य सार्वार्थ्यं तस्य भिद्यते ।। २.२५० ।।
यौगपद्यं अतिक्रम्य पर्याये व्यवतिष्ठते ।
अर्थप्रकरणाभ्यां वा योगाच्छब्दान्तरेण वा ।। २.२५१ ।।
यथा सास्नादिमान्पिण्डो गोशब्देनाभिधीयते ।
तथा स एव गोशब्दो वाहीकेऽपि व्यवस्थितः ।। २.२५२ ।।
सर्वशक्तेस्तु तस्यैव शब्दस्यानेकधर्मणः ।
प्रसिद्धिभेदाद्गौणत्वं मुख्यत्वं चोपजायते ।। २.२५३ ।।
एको मन्त्रस्तथाध्यात्मं अधिदैवं अधिक्रतु ।
असंकरेण सर्वार्थो भिन्नशक्तिरवस्थितः ।। २.२५४ ।।
गोत्वानुषङ्गो वाहीके निमित्तात्कैश्चिदिष्यते ।
अर्थमात्रं विपर्यस्तं शब्दः स्वार्थे व्यवस्थितः ।। २.२५५ ।।
तथा स्वरूपं शब्दानां सर्वार्थेष्वनुषज्यते ।
अर्थमात्रं विपर्यस्तं स्वरूपे तु श्रुतिः स्थिता ।। २.२५६ ।।
एकत्वं तु सरूपत्वाच्छब्दयोर्गौणमुख्ययोः ।
प्राहुरत्यन्तभेदेऽपि भेदमार्गानुदर्शिनः ।। २.२५७ ।।
सामिधेन्यन्तरं चैवं आवृत्तावनुषज्यते ।
मन्त्रास्च विनियोगेन लभन्ते भेदं ऊहवत् ।। २.२५८ ।।
तान्याम्नायान्तराण्येव पठ्यते किं चिदेव तु ।
अनर्थकानां पाठो वा शेषस्त्वन्यः प्रतीयते ।। २.२५९ ।।
शब्दस्वरूपं अर्थस्तु पाठेऽन्यैरुपवर्ण्यते ।
अत्यन्तभेदः सर्वेषां तत्संबन्धात्तु तद्वताम् ।। २.२६० ।।
अन्या संस्कारसावित्री कर्मण्यन्या प्रयुज्यते ।
अन्या जपप्रबन्धेषु सा त्वेकैव प्रतीयते ।। २.२६१ ।।
अर्थस्वरूपे शब्दानां स्वरूपाद्वृत्तिं इच्छतः ।
वाक्यरूपस्य वाक्यार्थे वृत्तिरन्यानपेक्षया ।। २.२६२ ।।
अनेकार्थत्वं एकस्य यैः शब्दस्यानुगम्यते ।
सिद्ध्यसिद्धिकृता तेषां गौणमुख्यप्रकल्पना ।। २.२६३ ।।
अर्थप्रकरणापेक्षो यो वा शब्दान्तरैः सह ।
युक्तः प्रत्याययत्यर्थं तं गौणं अपरे विदुः ।। २.२६४ ।।
शुद्धस्योच्चारणे स्वार्थः प्रसिद्धो यस्य गम्यते ।
स मुख्य इति विज्ञेयो रूपमात्रनिबन्धनः ।। २.२६५ ।।
यस्त्वन्यस्य प्रयोगेण यत्नादिव नियुज्यते ।
तं अप्रसिद्धं मन्यन्ते गौणार्थाभिनिवेशिनम् ।। २.२६६ ।।
स्वार्थे प्रवर्तमानोऽपि यस्यार्थं योऽवलम्बते ।
निमित्तं तत्र मुख्यं स्यान्निमित्ती गौण इष्यते ।। २.२६७ ।।
पुरारादिति भिन्नेऽर्थे यौ वर्तेते विरोधिनि ।
अर्थप्रकरणापेक्षं तयोरप्यवधारणम् ।। २.२६८ ।।
वाक्यस्यार्थात्पदार्थानां अपोद्धारे प्रकल्पिते ।
शब्दान्तरेण संबन्धः कस्यैकस्योपपद्यते ।। २.२६९ ।।
यच्चाप्येकं पदं दृष्टं चरितास्तिक्रियं क्व चित् ।

तद्वाक्यान्तरं एवाहुर्न तदन्येन युज्यते । । २.२७० । ।
यच्च कोऽयं इति प्रश्ने गौरश्व इति चोच्यते ।
प्रश्न एव क्रिया तत्र प्रक्रान्ता दर्शनादिका । । २.२७१ । ।
नैवाधिकत्वं धर्माणां न्यूनता वा प्रयोजिका ।
आधिक्यं अपि मन्यन्ते प्रसिद्धेर्न्यूनतां क्व चित् । । २.२७२ । ।
जातिशब्दोऽन्तरेणापि जातिं यत्र प्रयुज्यते ।
संबन्धिसदृशाद्धर्मात्तं गौणं अपरे विदुः । । २.२७३ । ।
विपर्यासादिवार्थस्य यत्रार्थान्तरतां इव ।
मन्यन्ते स गवादिस्तु गौण इत्युच्यते क्व चित् । । २.२७४ । ।
नियताः साधनत्वेन रूपशक्तिसमन्विताः ।
यथा कर्मसु गम्यन्ते सीरासिमुसलादयः । । २.२७५ । ।
क्रियान्तरे न चैतेषां विभवन्ति न शक्तयः ।
रूपादेव तु तादर्थ्यं नियमेन प्रतीयते । । २.२७६ । ।
तथैव रूपशक्तिभ्यां उत्पत्त्या समवस्थितः ।
शब्दो नियततादर्थ्यः शक्त्यान्यत्र प्रयुज्यते । । २.२७७ । ।
श्रुतिमात्रेण यत्रास्य सामर्थ्यं अवसीयते ।
तं मुख्यं अर्थं मन्यन्ते गौणं यत्नोपपादितम् । । २.२७८ । ।
गोयुष्मन्महतां च्व्यर्थे स्वार्थादर्थान्तरे स्थितौ ।
अर्थान्तरस्य तद्भावस्तत्र मुख्योऽपि दृश्यते । । २.२७९ । ।
महत्त्वं शुक्लभावं च प्रकृतिः प्रतिपद्यते ।
भेदेनापेक्षिता सा तु गौणत्वस्य प्रसाधिका । । २.२८० । ।
अग्निसोमादयः शब्दा ये स्वरूपपदार्थकाः ।
संज्ञिभिः संप्रयुज्यन्तेऽप्रसिद्धेस्तेषु गौणता । । २.२८१ । ।
अग्निदत्तस्तु योऽग्निः स्यात्तत्र स्वार्थोपसर्जनः ।
शब्दो दत्तार्थवृत्तित्वाद्गौणत्वं प्रतिपद्यते । । २.२८२ । ।
निमित्तभेदात्प्रक्रान्ते शब्दव्युत्पत्तिकर्मणि ।
हरिश्चन्द्रादिषु सुटो भावाभावौ व्यवस्थितौ । । २.२८३ । ।
ऋष्यादौ प्राप्तसंस्कारो यः शब्दोऽन्येन युज्यते ।
तत्रान्तरङ्गसंस्कारो बाह्येऽर्थे न निवर्तते । । २.२८४ । ।
अत्यन्तविपरीतोऽपि यथा योऽर्थोऽवधार्यते ।
यथासंप्रत्ययं शब्दस्तत्र मुख्यः प्रयुज्यते । । २.२८५ । ।
यद्यपि प्रत्ययाधीनं अर्थतत्त्वावधारणम् ।
न सर्वः प्रत्ययस्तस्मिन्प्रसिद्ध इव जायते । । २.२८६ । ।
दर्शनं सलिले तुल्यं मृगतृष्णादिदर्शनैः ।
भेदात्तु स्पर्शनादीनां न जलं मृगतृष्णिका । । २.२८७ । ।
यदसाधारणं कार्यं प्रसिद्धं रज्जुसर्पयोः ।
तेन भेदपरिच्छेदस्तयोस्तुल्येऽपि दर्शने । । २.२८८ । ।
प्रसिद्धार्थविपर्यास- निमित्तं यच्च दृश्यते ।
यस्तस्माल्लक्ष्यते भेदस्तं असत्यं प्रचक्षते । । २.२८९ । ।
यच्च निम्नोन्नतं चित्रे सरूपं पर्वतादिभिः ।
न तत्र प्रतिघातादि कार्यं तद्वत्प्रवर्तते । । २.२९० । ।
स्पर्शप्रबन्धो हस्तेन यथा चक्रस्य संततः ।
न तथालातचक्रस्य विच्छिन्नं स्पृश्यते हि तत् । । २.२९१ । ।
वप्रप्राकारकल्पैश्च स्पर्शनावरणे यथा ।
नगरेषु न ते तद्वद्गन्धर्वनगरेष्वपि । । २.२९२ । ।
मृगपश्वादिभिर्यावान्मुख्यैरर्थः प्रसाध्यते ।
तावान्न मृन्मयेष्वस्ति तस्मात्ते विषयः कनः । । २.२९३ । ।
महानाव्रियते देशः प्रसिद्धैः पर्वतादिभिः ।
अल्पदेशान्तरावस्थं प्रतिबिम्बं तु दृश्यते । । २.२९४ । ।

मरणादिनिमित्तं च यथा मुख्या विषादयः ।
न ते स्वप्नादिषु स्वस्य तद्वदर्थस्य साधकाः । । २.२९५ । ।
देशकालेन्द्रियगतैर्भेदैर्यद्दृश्यतेऽन्यथा ।
यथा प्रसिद्धिर्लोकस्य तथा तदवसीयते । । २.२९६ । ।
यच्चोपघातजं ज्ञानं यच्च ज्ञानं अलौकिकम् ।
न ताभ्यां व्यवहारोऽस्ति शब्दा लोकनिबन्धनाः । । २.२९७ । ।
घटादिषु यथा दीपो येनार्थेन प्रयुज्यते ।
ततोऽन्यस्यापि सांनिध्यात्स करोति प्रकाशनम् । । २.२९८ । ।
संसर्गिषु तथार्थेषु शब्दो येन प्रयुज्यते ।
तस्मात्प्रयोजकादन्यानपि प्रत्याययत्यसौ । । २.२९९ । ।
निर्मन्थनं यथारण्योरग्न्यर्थं उपपादितम् ।
धूमं अप्यनभिप्रेतं जनयत्येकसाधनम् । । २.३०० । ।
तथा शब्दोऽपि कस्मिंश्चित्प्रत्याय्येऽर्थे विवक्षिते ।
अविवक्षितं अप्यर्थं प्रकाशयते संनिधेः । । २.३०१ । ।
यथैवात्यन्तसंसृष्टस्त्यक्तुं अर्थो न शक्यते ।
तथा शब्दोऽपि संबन्धी प्रविवक्तुं न शक्यते । । २.३०२ । ।
अर्थानां संनिधानेऽपि सति चैषां प्रकाशने ।
प्रयोजकोऽर्थः शब्दस्य रूपाभेदेऽपि गम्यते । । २.३०३ । ।
क्व चिद्गुणप्रधानत्वं अर्थानां अविवक्षितम् ।
क्व चित्सांनिध्यं अप्येषां प्रतिपत्तावकारणम् । । २.३०४ । ।

- यच्चानुपात्तं शब्देन तत्कस्मिंश्चित्प्रतीयते ।

क्व चित्प्रधानं एवार्थो भवत्ययस्य लक्षणम् । । २.३०५ * । ।

- आख्यातं तद्धितार्थस्य यत्किं चिदुपदर्शकम् ।

गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः । । २.३०६ * । ।

- निर्देशे लिङ्गसंख्यानां संनिधानं अकारणम् ।

प्रमाणं अर्धह्रसादावनुपात्तं प्रतीयते । । २.३०७ । ।
ह्रस्वस्यार्धं च यद्दृष्टं तत्तस्यासंनिधावपि ।
ह्रस्वस्य लक्षणार्थत्वात्तद्वदेवाभिधीयते । । २.३०८ । ।
दीर्घप्लुताभ्यां तस्य स्यान्मात्रया वा विशेषणम् ।
जातेर्वा लक्षणाय स्यात्सर्वथा सप्तपर्णवत् । । २.३०९ । ।
गन्तव्यं दृश्यतां सूर्य इति कालस्य लक्षणे ।
ज्ञायतां काल इत्येतत्सोपायं अभिधीयते । । २.३१० । ।
विध्यत्यधनुषेत्यत्र विशेषेण निदर्श्यते ।
सामान्यं आश्रयः शक्तेर्यः कश्चित्प्रतिपादकः । । २.३११ । ।
काकेभ्यो रक्ष्यतां सर्पिरिति बालोऽपि चोदितः ।
उपघातपरे वाक्ये न श्वादिभ्यो न रक्षति । । २.३१२ । ।
प्रक्षालने शरावाणां स्थाननिर्मार्जनं तथा ।
अनुक्तं अपि रूपेण भुज्यङ्गत्वात्प्रतीयते । । २.३१३ । ।
वाक्यात्प्रकरणादर्थादौचित्याद्देशकालतः ।
शब्दार्थाः प्रविभज्यन्ते न रूपादेव केवलात् । । २.३१४ । ।
संसर्गो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः । । २.३१५ । ।
सामर्थ्यं औचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः । । २.३१६ । ।
भेदपक्षेऽपि सारूप्याद्भिन्नार्थाः प्रतिपत्तृषु ।
नियता यान्त्यभिव्यक्तिं शब्दाः प्रकरणादिभिः । । २.३१७ । ।
नामाख्यातसरूपा ये कार्यान्तरनिबन्धनाः ।

शब्दा वाक्यस्य तेष्वर्थो न रूपादधिगम्यते ।। २.३१८ ।।
या प्रवृत्तिनिवृत्त्यर्था स्तुतिनिन्दाप्रकल्पना ।
कुशलः प्रतिपत्ता तां अयथार्थां समीहते ।। २.३१९ ।।
विधीयमानं यत्क्रर्म दृष्टादृष्टप्रयोजनम् ।
स्तूयते सा स्तुतिस्तस्य कर्तुरेव प्रयोजिका ।। २.३२० ।।
व्याघ्रादिव्यपदेशेन यथा बालो निवर्त्यते ।
असत्योऽपि तथा कश्चित्प्रत्यवायोऽभिधीयते ।। २.३२१ ।।
न संविधानां कृत्वापि प्रत्यवाये तथाविधे ।
शास्त्रेण प्रतिषिद्धेऽर्थे विद्वान्कश्चित्प्रवर्तते ।। २.३२२ ।।
सर्पेषु संविधायापि सिद्धैर्मन्त्रौषधादिभिः ।
नान्यथा प्रतिपत्तव्यं न दतो गमयेदिति ।। २.३२३ ।।
क्व चित्तत्त्वसमाख्यानं क्रियते स्तुतिनिन्दयोः ।
तत्रापि च प्रवृत्तिश्च निवृत्तिश्चोपदिश्यते ।। २.३२४ ।।
रूपं सर्वपदार्थानां वाक्यार्थोपनिबन्धनम् ।
सापेक्षा ये तु वाक्यार्थाः पदार्थैरेव ते समाः ।। २.३२५ ।।
वाक्यं तदपि मन्यन्ते यत्पदं चरितक्रियम् ।
अन्तरेण क्रियाशब्दं वाक्यादेर्द्वित्वदर्शनात् ।। २.३२६ ।।
आख्यातशब्दे नियतं साधनं यत्र गम्यते ।
तदप्येकं समाप्तार्थं वाक्यं इत्यभिधीयते ।। २.३२७ ।।
शब्दव्यवहिता बुद्धिरप्रयुक्तपदाश्रया ।
अनुमानं तदर्थस्य प्रत्यये हेतुरुच्यते ।। २.३२८ ।।
[थिस्वेर्से इसोन्ल्यिन्ऱौ]
अपरे तु पदस्यैव तं अर्थं प्रतिजानते ।
शब्दान्तराभिसंबन्धं अन्तरेण व्यवस्थितम् ।। २.३२९ ।।
यस्मिन्नुच्चरिते शब्दे यदा योऽर्थः प्रतीयते ।
तं आहुरर्थं तस्यैव नान्यदर्थस्य लक्षणम् ।। २.३३० ।।
क्रियार्थोपपदेश्वेवं स्थानिनां गम्यते क्रिया ।
वृत्तौ निरादिभिश्चैवं क्रान्ताद्यर्थः प्रतीयते ।। २.३३१ ।।
तानि शब्दान्तराण्येव पर्याया इव लौकिकाः ।
अर्थप्रकरणाभ्यां तु तेषां स्वार्थो नियम्यते ।। २.३३२ ।।
प्रतिबोधाभ्युपायास्तु ये तं तं पुरुषं प्रति ।
नावश्यं तेऽभिसंबद्धाः शब्दा ज्ञेयेन वस्तुना ।। २.३३३ ।।
असत्यां प्रतिपत्तौ वा मिथ्या वा प्रतिपादने ।
स्वैरर्थैर्नित्यसंबन्धास्ते ते शब्दा व्यवस्थिताः ।। २.३३४ ।।
यथाप्रकरणं द्वारं इत्यस्यां कर्मणः श्रुतौ ।
बधान देहि वेत्येतदुपायादवगम्यते ।। २.३३५ ।।
तत्र साधनवृत्तिर्यः शब्दः सत्त्वनिबन्धनः ।
न स प्रधानभूतस्य साध्यस्यार्थस्य वाचकः ।। २.३३६ ।।
स्वार्थमात्रं प्रकाश्यासौ सापेक्षो विनिवर्तते ।
अर्थस्तु तस्य संबन्धी प्रकल्पयति संनिधिम् ।। २.३३७ ।।
पारार्थ्यस्याविशिष्टत्वान्न शब्दाच्छब्दसंनिधिः ।
नार्थाच्छब्दस्य सांनिध्यं न शब्दादर्थसंनिधिः ।। २.३३८ ।।
नष्टरूपं इवाख्यातं आक्षिप्तं कर्मवाचिना ।
यदि प्राप्तं प्रधानत्वं युगपद्भावसत्त्वयोः ।। २.३३९ ।।
तैस्तु नामसरूपत्वं आख्यातस्यास्य वर्ण्यते ।
अन्वयव्यतिरेकाभ्यां व्यवहारो विभज्यते ।। २.३४० ।।
न चापि रूपात्संदेहे वाचकत्वं निवर्तते ।
अर्धं पशोरिति यथा सामर्थ्यात्तद्धि कल्पते ।। २.३४१ ।।
सर्वं सत्त्वपदं शुद्धं यदि भावनिबन्धनम् ।

संसर्गे च विभक्तोऽस्य तस्यार्थो न पृथग्यदि । । २.३४२ । ।
क्रियाप्रधानं आख्यातं नाम्नां सत्त्वप्रधानता ।
चत्वारि पदजातानि सर्वं एतद्विरुध्यते । । २.३४३ । ।
वाक्यस्य बुद्धौ नित्यत्वं अर्थयोगं च लौकिकम् ।
दृष्ट्वा चतुष्ट्वं नास्तीति वदत्यौदुम्बरायणः । । २.३४४ । ।
व्याप्तिमांश्च लघुश्चैव व्यवहारः पदाश्रयः ।
लोके शास्त्रे च कार्यार्थं विभागेनैव कल्पितः । । २.३४५ । ।
न लोके प्रतिपत्तॄणां अर्थयोगात्प्रसिद्धयः ।
तस्मादलौकिको वाक्यादन्यः कश्चिन्न विद्यते । । २.३४६ । ।
अन्यत्र श्रूयमाणैश्च लिङ्गैर्वाक्यैश्च सूचिताः ।
स्वार्था एव प्रतीयन्ते रूपाभेदादलक्षिताः । । २.३४७ । ।
उत्सर्गवाक्ये यत्त्यक्तं अशब्दं इव शब्दवत् ।
तद्बाधकेषु वाक्येषु श्रुतं अन्यत्र गम्यते । । २.३४८ । ।
ब्राह्मणानां श्रुतिर्दध्नि प्रक्रान्ता माठराद्विना ।
माठरस्तक्रसंबन्धात्तत्राचष्टे यथार्थताम् । । २.३४९ । ।
अनेकाख्यातयोगेऽपि वाक्यं न्यायापवादयोः ।
एकं एवेष्यते कैश्चिद्भिन्नरूपं इव स्थितम् । । २.३५० । ।
नियमः प्रतिषेधश्च विधिशेषस्तथा सति ।
द्वितीये यो लुगाख्यातस्तच्छेषं अलुकं विदुः । । २.३५१ । ।
निराकाङ्क्षाणि निर्वृत्तौ प्रधानानि परस्परम् ।
तेषां अनुपकारित्वात्कथं स्यादेकवाक्यता । । २.३५२ । ।
विशेषविधिनार्थित्वाद्वाक्यशेषोऽनुमीयते ।
विधेयवन्निवर्त्येऽर्थे तस्मात्तुल्यं व्यपेक्षणम् । । २.३५३ । ।
संज्ञाशब्दैकदेशो यस्तस्य लोपो न विद्यते ।
विशिष्टरूपा सा संज्ञा कृता च न निवर्तते । । २.३५४ । ।
संज्ञान्तराच्च दत्तादेर्नान्या संज्ञा प्रतीयते ।
संज्ञिनं देवदत्ताख्यं दत्तशब्दः कथं वदेत् । । २.३५५ । ।
सर्वैरवयवैस्तुल्यं संबन्धं समुदायवत् ।
के चिच्छब्दस्वरूपाणां मन्यन्ते सर्वसंज्ञिभिः । । २.३५६ । ।
वर्णानां अर्थवत्त्वं तु संज्ञानां संज्ञिभिर्भवेत् ।
संबद्धोऽवयवः संज्ञा- प्रविवेके न कल्पते । । २.३५७ । ।
सर्वस्वरूपैर्युगपत्संबन्धे सति संज्ञिनः ।
नैकदेशसरूपेभ्यस्तत्प्रत्यायनसंभवः । । २.३५८ । ।
एकदेशात्तु संघाते केषां चिज्जायते स्मृतिः ।
स्मृतेस्तु विषयाच्छब्दात्संघातार्थः प्रतीयते । । २.३५९ । ।
एकदेशात्स्मृतिर्भिन्ने संघाते नियता कथम् ।
कथं प्रतीयमानः स्याच्छब्दोऽर्थस्याभिधायकः । । २.३६० । ।
एकदेशसरूपास्तु तैस्तैर्भेदैः समन्विताः ।
अनुनिष्पादिनः शब्दाः संज्ञासु समवस्थिताः । । २.३६१ । ।
साधारणत्वात्संधिग्धाः सामर्थ्यान्नियताश्रयाः ।
तेषां ये साधवस्तेषु शास्त्रे लोपादि शिष्यते । । २.३६२ । ।
तुल्यायां अनुनिष्पत्तौ ज्ये-द्रा-घा इत्यसाधवः ।
न ह्यन्वाख्यायके शास्त्रे तेषु दत्तादिवत्स्मृतिः । । २.३६३ । ।
कृतणत्वाश्च ये शब्दा नित्याः खरणसादयः ।
एकद्रव्योपदेशित्वात्तान्साधून्संप्रचक्षते । । २.३६४ । ।
गोत्राण्येव तु तान्याहुः संज्ञाशक्तिसमन्वयात् ।
निमित्तापेक्षणं तेषु स्वार्थे नावश्यं इष्यते । । २.३६५ । ।
व्यवहाराय नियमः संज्ञानां संज्ञिनि क्व चित् ।
नित्य एव तु संबन्धो डित्थादिषु गवादिवत् । । २.३६६ । ।

कृतकत्वादनित्यत्वं संबन्धस्योपपद्यते ।
संज्ञायां सा हि पुरुषैर्यथाकामं नियुज्यते । । २.३६७ । ।
यथा हि पांसुलेखानां बालकैर्मधुक्रादयः ।
संज्ञाः क्रियन्ते सर्वासु संज्ञास्वेषैव कल्पना । । २.३६८ । ।
वृद्ध्यादीनां च शास्त्रेऽस्मिन्त् छक्त्यवच्छेदलक्षणः ।
अकृत्रिमो हि संबन्धो विशेषणविशेष्यवत् । । २.३६९ । ।
संज्ञा स्वरूपं आश्रित्य निमित्ते सति लौकिकी ।
का चित्प्रवर्तते का चिन्निमित्तासंनिधावपि । । २.३७० । ।
शास्त्रेऽपि महती संज्ञा स्वरूपोपनिबन्धना ।
अनुमानं निमित्तस्य संनिधाने प्रतीयते । । २.३७१ । ।
आवृत्तेरनुमानं वा सारूप्यात्तत्र गम्यते ।
शब्दभेदानुमानं वा शक्तिभेदस्य वा गतिः । । २.३७२ । ।
क्व चिद्विषयभेदेन कृत्रिमा व्यवतिष्ठते ।
संख्यायां एकविषयं व्यवस्थानं द्वयोरपि । । २.३७३ । ।
विषयं कृत्रिमस्यापि लौकिकः क्व चिदुच्चरन् ।
व्याप्नोति दूरात्संबुद्धौ तथा हि ग्रहणं द्वयोः । । २.३७४ । ।
सङ्घैकशेषद्वन्द्वेषु के चित्सामर्थ्यलक्षणम् ।
प्रत्याश्रयं अवस्थानं क्रियाणां प्रतिजानते । । २.३७५ । ।
भोजनं फलरूपाभ्यां एकैकस्मिन्समाप्यते ।
अन्यथा हि व्यवस्थाने न तदर्थः प्रकल्प्यते । । २.३७६ । ।
अन्नादानादि रूपां च सर्वे तृप्तिफलां भुजिम् ।
प्रत्येकं प्रतिपद्यन्ते न तु नाट्यक्रियां इव । । २.३७७ । ।
पाद्यवत्सा विभागेन सामर्थ्यादवतिष्ठते ।
भुजिः करोति भुज्यर्थं न तन्त्रेण प्रदीपवत् । । २.३७८ । ।
दृश्यादिस्तु क्रियैकापि तथाभूतेषु कर्मसु ।
आवृत्तिं अन्तरेणापि समुदायाश्रया भवेत् । । २.३७९ । ।
भिन्नव्यापाररूपाणां व्यवहारादिदर्शने ।
कर्तृणां दर्शनं भिन्नं संभूयार्थस्य साधकम् । । २.३८० । ।
लक्ष्यस्य लोकसिद्धत्वाच्छास्त्रे लिङ्गस्य दर्शनात् ।
अर्थिष्वादैक्षु भेदेन वृद्धिसंज्ञा समाप्यते । । २.३८१ । ।
शतादानप्रधानत्वाद्दण्डने शतकर्मके ।
अर्थिनां गुणभेदेऽपि संख्येयोऽर्थो न भिद्यते । । २.३८२ । ।
सङ्घस्यैव विधेयत्वात्कार्यवत्प्रतिपादने ।
तत्र तन्त्रेण संबन्धः समासाभ्यस्तसंज्ञयोः । । २.३८३ । ।
लक्षणार्था श्रुतिर्येषां कां चिदेव क्रियां प्रति ।
तैर्व्यस्तैश्च समस्तैश्च स धर्म उपलक्ष्यते । । २.३८४ । ।
वृषलैर्न प्रवेष्टव्यं इत्येतस्मिन्गृहे यथा ।
प्रत्येकं संहतानां च प्रवेशः प्रतिषिध्यते । । २.३८५ । ।
संभूय त्वर्थलिप्सादि- प्रतिषेधोपदेशने ।
पृथगप्रतिषिद्धत्वात्प्रवृत्तिर्न विरुध्यते । । २.३८६ । ।
व्यवायलक्षणार्थात्वादट्कुप्वाङादिभिस्तथा ।
प्रत्येकं वा समस्तैर्वा णत्वं न प्रतिषिध्यते । । २.३८७ । ।
अनुग्रहार्था भोक्तृणां भुजिरारभ्यते यदा ।
देशकालाद्यभेदेन नानुगृह्णाति तानसौ । । २.३८८ । ।
पात्रादिभेदान्नानात्वं यस्यैकस्योपदिश्यते ।
विपर्यये वा भिन्नस्य तस्यैकत्वं प्रकल्प्यते । । २.३८९ । ।
संहत्यापि च कुर्वाणा भेदेन प्रतिपादिताः ।
स्वं स्वं भोज्यं विभागेन प्राप्तं संभूय भुञ्जते । । २.३९० । ।
वीप्साया विषयाभावाद्विरोधादन्यसंख्यया ।

द्विधा समाप्त्ययोगाच्च शतं सङ्घेऽवतिष्ठते । । २.३९१ । ।
भुजिर्द्वन्द्वैकशेषाभ्यां यत्रान्यैः सह शिष्यते ।
तत्रापि लक्षणार्थत्वाद्द्विधा वाक्यं समाप्यते । । २.३९२ । ।
वाक्यान्तराणां प्रत्येकं समाप्तिः कैश्चिदिष्यते ।
रूपान्तरेण युक्तानां वाक्यनां तेन संग्रहः । । २.३९३ । ।
न वाक्यस्याभिधेयानि भेदवाक्यानि कानि चित् ।
तस्मिंस्तूच्चरिते भेदांस्तथान्यान्प्रतिपद्यते । । २.३९४ । ।
येषां समस्तो वाक्यार्थः प्रतिभेदं समाप्यते ।
तेषां तदानीं भिन्नस्य किं पदार्थस्य सत्तया । । २.३९५ । ।
अथ तैरेव जनितः सोऽर्थो भिन्नेषु वर्तते ।
पूर्वस्यार्थस्य तेन स्याद्विरोधः सह वा स्थितिः । । २.३९६ । ।
सहस्थितौ विरोधित्वं स्याद्विशिष्टाविशिष्टयोः ।
व्यभिचारी तु संबन्धस्त्यागेऽर्थस्य प्रसज्यते । । २.३९७ । ।
एकः साधारणो वाच्यः प्रतिशब्दं अवस्थितः ।
सङ्घे सङ्घिषु चार्थात्मा सन्निधाननिदेशकः । । २.३९८ । ।
यथा साधारणे स्वत्वं त्यागस्य च फलं धने ।
प्रीतिश्चाविकला तद्वत्संबन्धोऽर्थेन तद्वताम् । । २.३९९ । ।
वर्णानां अर्थवत्तायां तेनैवार्थेन तद्वति ।
समुदाये न चैकत्वं भेदेन व्यवतिष्ठते । । २.४०० । ।
एकेनैव प्रदीपेन सर्वे साधारणं धनम् ।
पश्यन्ति तद्वदेकेन सुपा संख्याभिधीयते । । २.४०१ । ।
नार्थवत्ता पदे वर्णे वाक्ये चैवं विशिष्यते ।
अभ्यासात्प्रक्रमोऽन्यस्तु विरुद्ध इव दृश्यते । । २.४०२ । ।
विनियोगादृते शब्दो न स्वार्थस्य प्रकाशकः ।
अर्थाभिधानसंबन्धं उक्तिद्वारं प्रचक्षते । । २.४०३ । ।
यथा प्रणिहितं चक्षुर्दर्शनायोपकल्पते ।
तथाभिसंहितः शब्दो भवत्यर्थस्य वाचकः । । २.४०४ । ।
क्रियाव्यवेतः संबन्धो दृष्टः करणकर्मभिः ।
अभिधानियमस्तस्मादभिधानाभिधेययोः । । २.४०५ । ।
बहुष्वेकाभिधानेषु सर्वेष्वेकार्थकारिषु ।
यत्प्रयोक्ताभिसंधत्ते शब्दस्तत्रावतिष्ठते । । २.४०६ । ।
आम्नायशब्दानभ्यासे के चिदाहुरनर्थकान् ।
स्वरूपमात्रवृत्तींश्च परेषां प्रतिपादने । । २.४०७ । ।
अभिधानक्रियायोगादर्थस्य प्रतिपादकान् ।
नियोगभेदान्मन्यन्ते तानेवैकत्वदर्शिनः । । २.४०८ । ।
तेषां अत्यन्तनानात्वं नानात्वव्यवहारिणः ।
अक्षादीनां इव प्राहुरेकजातिसमन्वयात् । । २.४०९ । ।
प्रयोगादभिसंधानं अन्यदेषु न विद्यते ।
विषये यतशक्तित्वात्स तु तत्र व्यवस्थितः । । २.४१० । ।
नानात्वस्यैव संज्ञानं अर्थप्रकरणादिभिः ।
न जात्वर्थान्तरे वृत्तिरन्यार्थानां कथं चन । । २.४११ । ।
पदरूपं च यद्वाक्यं अस्तित्वोपनिबन्धनम् ।
कामं विमर्शस्तत्रायं न वाक्यावयवे पदे । । २.४१२ । ।
यथैवानर्थकैर्वर्णैर्विशिष्टोऽर्थोऽभिधीयते ।
पदैरनर्थकैरेवं विशिष्टोऽर्थोऽभिधीयते । । २.४१३ । ।
यदन्तराले ज्ञानं तु पदार्थेषूपजायते ।
प्रतिपत्तेरुपायोऽसौ प्रक्रमानवधारणात् । । २.४१४ । ।
पूर्वैरर्थैरनुगतो यथार्थात्मा परः परः ।
संसर्ग एव प्रक्रान्तस्तथान्येष्वर्थवस्तुषु । । २.४१५ । ।

अङ्गीकृते तु केषां चित्साध्येनार्थेन साधने ।
आराधनियमार्थैव साधनानां पुनः श्रुतिः ।। २.४१६ ।।
आधारे नियमाभावात्तदाक्षेपो न विद्यते ।
सामर्थ्यात्संभवस्तस्य श्रुतिस्त्वन्यनिवृत्तये ।। २.४१७ ।।
क्रिया क्रियान्तराद्भिन्ना नियताधारसाधना ।
प्रक्रान्ता प्रतिपत्तॄणां भेदाः संबोधहेतवः ।। २.४१८ ।।
अविभागं तु शब्देभ्यः क्रमवद्भ्योऽपदक्रमम् ।
प्रकाशते तदन्येषां वाक्यं वाक्यार्थ एव च ।। २.४१९ ।।
स्वरूपं विद्यते यस्य तस्यात्मा न निरूप्यते ।
नास्ति यस्य स्वरूपं तु तस्यैवात्मा निरूप्यते ।। २.४२० ।।
अशब्दं अपरेऽर्थस्य रूपनिर्धारणं विदुः ।
अर्थावभासरूपा च शब्देभ्यो जायते स्मृतिः ।। २.४२१ ।।
अन्यथैवाग्निसंबन्धाद्दाहं दग्धोऽभिमन्यते ।
अन्यथा दाहशब्देन दाहार्थः संप्रतीयते ।। २.४२२ ।।
पृथङ्निविष्टतत्त्वानां पृथगर्थानुपातिनाम् ।
इन्द्रियाणां यथा कार्यं ऋते देहान्न कल्पते ।। २.४२३ ।।
तथा पदानां सर्वेषां पृथगर्थनिवेशिनाम् ।
वाक्येभ्यः प्रविभक्तानां अर्थवत्ता न विद्यते ।। २.४२४ ।।
संसर्गरूपं संसृष्टेष्वर्थवस्तुषु गृह्यते ।
नात्रोपाख्यायते तत्त्वं अपदार्थस्य दर्शनात् ।। २.४२५ ।।
दर्शनस्यापि यत्सत्यं न तथा दर्शनं स्थितम् ।
वस्तु संसर्गरूपेण तदरूपं निरूप्यते ।। २.४२६ ।।
अस्तित्वेनानुषक्तो वा निवृत्त्यात्मनि वा स्थितः ।
अर्थोऽभिधीयते यस्मादतो वाक्यं प्रयुज्यते ।। २.४२७ ।।
क्रियानुषङ्गेण विना न पदार्थः प्रतीयते ।
सत्यो वा विपरीतो वा व्यवहारे न सोऽस्त्यतः ।। २.४२८ ।।
सदित्येतत्तु यद्वाक्यं तदभूदस्ति नेति वा ।
क्रियाभिधानसंबन्धं अन्तरेण न गम्यते ।। २.४२९ ।।
आख्यातपदवाच्येऽर्थे साधनोपनिबन्धने ।
विना सत्त्वाभिधानेन नाकाङ्क्षा विनिवर्तते ।। २.४३० ।।
प्राधान्यात्तु क्रिया पूर्वं अर्थस्य प्रविभज्यते ।
साध्यप्रयुक्तान्यङ्गानि फलं तस्य प्रयोजकम् ।। २.४३१ ।।
प्रयोक्तैवाभिसंधत्ते साध्यसाधनरूपताम् ।
अर्थस्य चाभिसंबन्ध- कल्पनां प्रसमीहते ।। २.४३२ ।।
पचिक्रियां करोतीति कर्मत्वेनाभिधीयते ।
पक्तिः करणरूपं तु साध्यत्वेन प्रतीयते ।। २.४३३ ।।
योऽंशो येनोपकारेण प्रयोक्तॄणां विवक्षितः ।
अर्थस्य सर्वशक्तित्वात्स तथैव व्यवस्थितः ।। २.४३४ ।।
आराद्वृत्तिषु संबन्धः कदा चिदभिधीयते ।
आश्लिष्टो योऽनुपश्लिष्टः स कदा चित्प्रतीयते ।। २.४३५ ।।
संसृष्टानां विभक्तत्वं संसर्गश्च विवेकिनाम् ।
नानात्मकानां एकत्वं नानात्वं च विपर्यये ।। २.४३६ ।।
सर्वात्मकत्वादर्थस्य नैरात्म्याद्वा व्यवस्थितम् ।
अत्यन्तयतशक्तित्वाच्छब्द एव निबन्धनम् ।। २.४३७ ।।
वस्तूपलक्षणः शब्दो नोपकारस्य वाचकः ।
न स्वशक्तिः पदार्थानां संस्प्रष्टुं तेन शक्यते ।। २.४३८ ।।
संबन्धिधर्मा संयोगः स्वशब्देनाभिधीयते ।
संबन्धः समवायस्तु संबन्धित्वेन गम्यते ।। २.४३९ ।।
लक्षणाद्व्यवतिष्ठन्ते पदार्था न तु वस्तुतः ।

उपकारात्स एवार्थः कथं चिदनुगम्यते ।। २.४४० ।।
वाक्यार्थो योऽभिसंबन्धो न तस्यात्मा क्व चित्स्थितः ।
व्यवहारे पदार्थानां तं आत्मानं प्रचक्षते ।। २.४४१ ।।
पदार्थे समुदाये वा समाप्तो नैव वा क्व चित् ।
पदार्थरूपभेदेन तस्यात्मा प्रविभज्यते ।। २.४४२ ।।
अन्वाख्यानाय यो भेदः प्रतिपत्तिनिबन्धनम् ।
साकाङ्क्षावयवं भेदे तेनान्यदुपवर्ण्यते ।। २.४४३ ।।
अनेकशक्तेरेकस्य प्रविभागोऽनुगम्यते ।
एकार्थत्वं हि वाक्यस्य मात्रयापि प्रतीयते ।। २.४४४ ।।
संप्रत्ययार्थाद्बाह्योऽर्थः सन्नसन्वा विभज्यते ।
बाह्यीकृत्य विभागस्तु शक्त्यपोद्धारलक्षणः ।। २.४४५ ।।
प्रत्ययार्थात्मनियताः शक्तयो न व्यवस्थिताः ।
अन्यत्र च ततो रूपं न तासां उपलभ्यते ।। २.४४६ ।।
बहुश्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यता ।
तिङा तिङ्भ्यो निघातस्य पर्युदासस्तथार्थवान् ।। २.४४७ ।।
एकतिङ्यस्य वाक्यं तु शास्त्रे नियतलक्षणम् ।
तस्यातिङ्ग्रहणेनार्थो वाक्यभेदान्न विद्यते ।। २.४४८ ।।
तिङन्तान्तरयुक्तेषु युक्तयुक्तेषु वा पुनः ।
मृगः पश्यत यातीति भेदाभेदौ न तिष्ठतः ।। २.४४९ ।।
इतिकर्तव्यतार्थस्य सामर्थ्याद्यत्र काङ्क्ष्यते ।
अशब्दलक्षणाकाङ्क्षं समाप्तार्थं तदुच्यते ।। २.४५० ।।
तत्त्वान्वाख्यानमात्रे तु यावानर्थोऽनुषज्यते ।
विनापि तत्प्रयोगेण श्रुतेर्वाक्यं समाप्यते ।। २.४५१ ।।
चिङ्क्रम्यमाणोऽधीष्वात्र जपंश्चङ्क्रमणं कुरु ।
तादर्थ्यस्याविशेषेऽपि शब्दाद्भेदः प्रतीयते ।। २.४५२ ।।
फलवन्तः क्रियाभेदाः क्रियान्तरनिबन्धनाः ।
असंख्याताः क्रमोद्देशैरेकाख्यातनिदर्शिताः ।। २.४५३ ।।
निवृतभेदा सर्वैव क्रियाख्यातेऽभिधीयते ।
श्रुतेरशक्या भेदानां प्रविभागप्रकल्पना ।। २.४५४ ।।
अश्वमेधेन यक्ष्यन्ते राजानः सत्त्रं आसते ।
ब्राह्मणा इति नाख्यात- रूपाद्भेदः प्रतीयते ।। २.४५५ ।।
सकृच्छ्रुता सप्तदशस्वनावृत्तापि या क्रिया ।
प्रजापत्येषु सामर्थ्यात्सा भेदं प्रतिपद्यते ।। २.४५६ ।।
देवदत्तादिषु भुजिः प्रत्येकं अवतिष्ठते ।
प्रतिस्वतन्त्रं वाक्यं वा भेदेन प्रतिपद्यते ।। २.४५७ ।।
उच्चारणे तु वाक्यानां अन्यद्रूपं न गृह्यते ।
प्रतिपत्तौ तु भिन्नानां अन्यद्रूपं प्रतीयते ।। २.४५८ ।।
एकं ग्रहणवाक्यं च सामान्येनाभिधीयते ।
कर्तरीति यथा तच्च पश्वादिषु विभज्यते ।। २.४५९ ।।
यदि आकाङ्क्षा निवर्तेत तद्भूतस्य सकृच्छ्रुतौ ।
नैवान्येनाभिसंबन्धं तदुपेयात्कथं चन ।। २.४६० ।।
एकरूपं अनेकार्थं तस्मादुपनिबन्धनम् ।
योनिर्विभागवाक्यानां तेभ्योऽनन्यदिव स्थितम् ।। २.४६१ ।।
क्व चित्क्रिया व्यक्तिभागैरुपकारे प्रवर्तते ।
सामान्यभाग एवास्याः क्व चिदर्थस्य साधकः ।। २.४६२ ।।
कालभिन्नाश्च ये भेदा ये चाप्युष्ट्रासिकादिषु ।
प्रक्रमे जातिभागस्य शब्दात्मा तैर्न भिद्यते ।। २.४६३ ।।
एकसंख्येषु भेदेषु भिन्ना जात्यादिभिः क्रियाः ।
भेदेन विनियुज्यन्ते तच्छब्दस्य सकृच्छ्रुतौ ।। २.४६४ ।।

अक्षादेषु यथा भिन्ना भक्षिभञ्जिदिविक्रियाः ।
प्रयोगकालाभेदेऽपि प्रतिभेदं पृथक्स्थिताः ।। २.४६५ ।।
अक्षिणां तन्त्रिणां तन्त्रं उपायस्तुल्यरूपता ।
एषां क्रमो विभक्तानां तन्निबद्धा सकृच्छ्रुतिः ।। २.४६६ ।।
द्वावप्युपायौ शब्दानां प्रयोगे समवस्थितौ ।
क्रमो वा यौगपद्यं वा यौ लोको नातिवर्तते ।। २.४६७ ।।
क्रमे विभज्यते रूपं यौगपद्ये न भिद्यते ।
क्रिया तु यौगपद्येऽपि क्रमरूपानुपातिनी ।। २.४६८ ।।
भेदसंसर्गशक्ती द्वे शब्दाद्भिन्ने इव स्थिते ।
यौगपद्येऽप्यनेकेन प्रयोगे भिद्यते श्रुतिः ।। २.४६९ ।।
अभिन्नो रूपभेदेन य एकोऽर्थो विवक्षितः ।
तस्यावयवधर्मेण समुदायोऽनुगम्यते ।। २.४७० ।।
भेदनिर्वचने त्वस्य प्रत्येदं वा समाप्यते ।
श्रुतिर्वचनभिन्ना वा वाक्यभेदेऽवतिष्ठते ।। २.४७१ ।।
तत्रैकवचनान्तो वा सोऽक्षशब्दः प्रयुज्यते ।
प्रत्येकं वा बहुत्वेन प्रविभागो यथाश्रुति ।। २.४७२ ।।
द्विष्ठानि यानि वाक्यानि तेष्वप्येकत्वदर्शिनाम् ।
अनेकशक्तेरेकस्य स्वशक्तिः प्रविभज्यते ।। २.४७३ ।।
अत्यन्तभिन्नयोर्वा स्यात्प्रयोगे तन्त्रलक्षणः ।
उपायस्तत्र संसर्गः प्रतिपत्तृषु भिद्यते ।। २.४७४ ।।
भेदेनाधिगतौ पूर्वं शब्दौ तुल्यश्रुती पुनः ।
तन्त्रेण प्रतिपत्तारः प्रयोक्त्रा प्रतिपादिताः ।। २.४७५ ।।
एकस्यापि विवक्षायां अनुनिष्पद्यते परः ।
विनाभिसंधिना शब्दः शक्तिरूपः प्रकाशते ।। २.४७६ ।।
अनेका शक्तिरेकस्य युगपच्छ्रूयते क्व चित् ।
अग्निः प्रकाशदाहाभ्यां एकत्रापि नियुज्यते ।। २.४७७ ।।
आवृत्तिशक्तिभिन्नार्थे वाक्ये सकृदपि श्रुते ।
लिङ्गाद्वा तन्त्रधर्माद्वा विभागो व्यवतिष्ठते ।। २.४७८ ।।
संप्रसारणसंज्ञायां लिङ्गाभ्यां वर्णवाक्ययोः ।
प्रविभागस्तथा सूत्र एकस्मिन्नेव जायते ।। २.४७९ ।।
तथा द्विर्वचनेऽचीति तन्त्रोपायादलक्षणः ।
एकशेषेण निर्देशो भाष्य एव प्रदर्शितः ।। २.४८० ।।
प्रायेण संक्षेपरुचीनल्पविद्यापरिग्रहान् ।
संप्राप्य वैयाकरणान्संग्रहेऽस्तं उपागते ।। २.४८१ ।।
कृतेऽथ पातञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेसं न्यायबीजानां महाभाष्ये निबन्धने ।। २.४८२ ।।
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ।
तस्मिन्नकृतबुद्धीनां नैवावास्थित निश्चयः ।। २.४८३ ।।
वैजिसौभवहर्यक्षैः शुष्कतर्कानुसारिभिः ।
आर्षे विप्लाविते ग्रन्थे संग्रहप्रतिकञ्चुके ।। २.४८४ ।।
यः पातञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः ।
कालेन दाक्षिणात्येषु ग्रन्थमात्रो व्यवस्थितः ।। २.४८५ ।।
पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः ।
स नीतो बहुशाखत्वं चान्द्राचार्यादिभिः पुनः ।। २.४८६ ।।
न्यायप्रस्थानमार्गांस्तानभ्यस्य स्वं च दर्शनम् ।
प्रणीतो गुरुणास्माकं अयं आगमसंग्रहः ।। २.४८७ ।।
वर्त्मनां अत्र केषां चिद्वस्तुमात्रं उदाहृतम् ।
काण्डे तृतीये न्यक्षेन भविष्यति विचारणा ।। २.४८८ ।।
प्रज्ञा विवेकं लभते भिन्नैरागमदर्शनैः ।

कियद्वा शक्यं उन्नेतुं स्वतर्कं अनुधावता ।। २.४८९ ।।
तत्तदुत्प्रेक्षमाणानां पुराणैरागमैर्विना ।
अनुपासितवृद्धानां विद्या नातिप्रसीदति ।। २.४९० ।।

# ३,१ः जातिसमुद्देशः

द्विधा कैश्चित्पदं भिन्नं चतुर्धा पञ्चधापि वा ।
अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत् ।। ३,१.१ ।।
पदार्थानां अपोद्धारे जातिर्वा द्रव्यं एव वा ।
पदार्थौ सर्वशब्दानां नित्यावेवोपवर्णितौ ।। ३,१.२ ।।
केषां चित्साहचर्येण जातिः शक्त्युपलक्षणम् ।
खदिरादिष्वशक्तेषु शक्तः प्रतिनिधीयते ।। ३,१.३ ।।
अस्वातन्त्र्यफलो बन्धिः प्रमाणादीव शिष्यते ।
अतो जात्यभिधानेऽपि शक्तिहीनं न गृह्यते ।। ३,१.४ ।।
संश्लेषमात्रं बध्नातिर्यदि स्यात्तु विवक्षितः ।
शक्त्याश्रये ततो लिङ्गं प्रमाणाद्यनुशासनम् ।। ३,१.५ ।।
स्वा जातिः प्रथमं शब्दैः सर्वैरेवाभिधीयते ।
ततोऽर्थजातिरूपेषु तदध्यारोपकल्पना ।। ३,१.६ ।।
यथा रक्ते गुणे तत्त्वं कषाये व्यपदिश्यते ।
संयोगिसन्निकर्षाच्च वस्त्रादिष्वपि गृह्यते ।। ३,१.७ ।।
तथा शब्दार्थसंबन्धाच्छब्दे जातिरवस्थिता ।
व्यपदेशेऽर्थजातीनां जातिकार्याय कल्पते ।। ३,१.८ ।।
जातिशब्दैकशेषे सा जातीनां जातिरिष्यते ।
शब्दजातय इत्यत्र तज्जातिः शब्दजातिषु ।। ३,१.९ ।।
या शब्दजातिः शब्देषु शब्देभ्यो भिन्नलक्षणा ।
जातिः सा शब्दजातित्वं अव्यतिक्रम्य वर्तते ।। ३,१.१० ।।
अर्थजात्यभिधानेऽपि सर्वे जात्यभिधायिनः ।
व्यापारलक्षणा यस्मात्पदार्थाः समवस्थिताः ।। ३,१.११ ।।
जातौ पदार्थे जातिर्वा विशेषो वापि जातिवत् ।
शब्दैरपेक्ष्यते यस्मादतस्ते जातिवाचिनः ।। ३,१.१२ ।।
द्रव्यधर्मा पदार्थे तु द्रव्ये सर्वोऽर्थ उच्यते ।
द्रव्यधर्माश्रयाद्द्रव्यं अतः सर्वोऽर्थ इष्यते ।। ३,१.१३ ।।
अनुप्रवृत्तिधर्मो वा जातिः स्यात्सर्वजातिषु ।
व्यावृत्तिधर्मसामान्यं विशेषे जातिरिष्यते ।। ३,१.१४ ।।
संयोगिधर्मभेदेन देशे च परिकल्पिते ।
तेषु देशेषु सामान्यं आकाशस्यापि विद्यते ।। ३,१.१५ ।।
अदेशानां घटादीनां देशाः संबन्धिनो यथा ।
आकाशस्याप्यदेशस्य देशाः संबन्धिनस्तथा ।। ३,१.१६ ।।
भिन्नवस्त्वाश्रया बुद्धिः संयोगिष्वनुवर्तते ।
समवायिषु भेदस्य ग्रहणं विनिवर्तते ।। ३,१.१७ ।।
अतः संयोगिदेशानां गौणत्वं परिकल्प्यते ।
अविवेकात्प्रदेशेभ्यो मुख्यत्वं समवायिनाम् ।। ३,१.१८ ।।
अनुप्रवृत्तिरूपा या प्रख्या तां आकृतिं विदुः ।
के चिद्व्यावृत्तिरूपां तु द्रव्यत्वेन प्रचक्षते ।। ३,१.१९ ।।
भिन्ना इति परोपाधिरभिन्ना इति वा पुनः ।
भावात्मसु प्रपञ्चोऽयं संसृष्टेष्वेव जायते ।। ३,१.२० ।।
नैकत्वं नापि नानात्वं न सत्त्वं न च नास्तिता ।
आत्मतत्त्वेषु भावानां असंसृष्टेषु विद्यते ।। ३,१.२१ ।।
सर्वशक्त्यात्मभूतत्वं एकस्यैवेति निर्णये ।
भावानां आत्मभेदस्य कल्पना स्यादनर्थिका ।। ३,१.२२ ।।
तस्माद्द्रव्यादयः सर्वाः शक्तयो भिन्नलक्षणाः ।
संसृष्टाः पुरुषार्थस्य साधिका न तु केवलाः ।। ३,१.२३ ।।
यथैव चेन्द्रियादीनां आत्मभूता समग्रता ।

तथा संबन्धिसंबन्ध- संसर्गेऽपि प्रतीयते । । ३,१.२४ । ।
न तदुत्पद्यते किं चिद्यस्य जातिर्न विद्यते ।
आत्माभिव्यक्तये जातिः कारणानां प्रयोजिका । । ३,१.२५ । ।
कारणेषु पदं कृत्वा नित्यानित्येषु जातयः ।
क्व चित्कार्येष्वभिव्यक्तिं उपयान्ति पुनः पुनः । । ३,१.२६ । ।
निर्वर्त्यमानं यत्कर्म जातिस्तत्रापि साधनम् ।
स्वाश्रयस्याभिनिष्पत्त्यै सा क्रियाणां प्रयोजिका । । ३,१.२७ । ।
विधौ वा प्रतिषेधे वा ब्राह्मणत्वादि साधनम् ।
व्यक्त्याश्रितास्रिता जातेः संख्याजातिर्विशेषिका । । ३,१.२८ । ।
यथा जलादिभिर्व्यक्तं मुखं एवाभिधीयते ।
तथा द्रव्यैरभिव्यक्ता जातिरेवाभिधीयते । । ३,१.२९ । ।
यथेन्द्रियगतो भेद इन्द्रियग्रहणादृते ।
इन्द्रियार्थेष्वदृश्योऽपि ज्ञानभेदाय कल्पते । । ३,१.३० । ।
तथात्मरूपग्रहणात्केषां चिद्व्यक्तयो विना ।
सामान्यज्ञानभेदानां उपयान्ति निमित्तताम् । । ३,१.३१ । ।
सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ ।
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयः स्मृताः । । ३,१.३२ । ।
संबन्धिभेदात्सत्तैव भिद्यमाना गवादिषु ।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः । । ३,१.३३ । ।
तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते ।
सा नित्या सा महानात्मा तां आहुस्त्वतलादयः । । ३,१.३४ । ।
प्राप्तक्रमा विशेषेषु क्रिया सैवाभिधीयते ।
क्रमरूपस्य संहारे तत्सत्त्वं इति कथ्यते । । ३,१.३५ । ।
सैव भावविकारेषु षडवस्थाः प्रपद्यते ।
क्रमेण शक्तिभिः स्वाभिरेवं प्रत्यवभासते । । ३,१.३६ । ।
आत्मभूतः क्रमोऽप्यस्या यत्रेदं कालदर्शनम् ।
पौर्वापर्यादिरूपेण प्रविभक्तं इव स्थितम् । । ३,१.३७ । ।
तिरोभावाभ्युपगमे भावानां सैव नास्तिता ।
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते । । ३,१.३८ । ।
पूर्वस्मात्प्रच्युता धर्मादप्राप्ता चोत्तरं पदम् ।
तदन्तराले भेदानां आश्रयाज्जन्म कथ्यते । । ३,१.३९ । ।
आश्रयः स्वात्ममात्रा वा भावा वा व्यतिरेकिनः ।
स्वशक्तयो वा सत्ताया भेददर्शनहेतवः । । ३,१.४० । ।
पृथिव्यादिष्वभिव्यक्तौ न संस्थानं अपेक्षते ।
अनुच्छिन्नाश्रयाज्जातिरनित्येऽप्याश्रये स्थिता । । ३,१.४१ । ।
अनुच्छेद्याश्रयां एके सर्वां जातिं प्रचक्षते ।
न यौगपद्यं प्रलये सर्वस्येति व्यवस्थिताः । । ३,१.४२ । ।
प्रकृतौ प्रविलीनेषु भेदेष्वेकत्वदर्शिनाम् ।
द्रव्यसत्त्वं प्रपद्यन्ते स्वाश्रया एव जातयः । । ३,१.४३ । ।
ब्राह्मणत्वादयो भावाः सर्वप्राणिष्ववस्थिताः ।
अभिव्यक्ताः स्वकार्याणां साधका इत्यपि स्मृतिः । । ३,१.४४ । ।
चित्रादिष्वप्यभिव्यक्तिर्जातीनां कैश्चिदिष्यते ।
प्राण्याश्रितास्तु ताः प्राप्तौ निमित्तं पुण्यपापयोः । । ३,१.४५ । ।
ज्ञानं त्वस्मद्विशिष्टानां तासु सर्वेन्द्रियं विदुः ।
आभ्यासान्मणिरूप्यादि- विशेषेष्विव तद्विदाम् । । ३,१.४६ । ।
जात्युत्पलादिगन्धादौ भेदतत्त्वं यदाश्रितम् ।
तद्भावप्रत्ययैर्लोकेऽनित्यत्वान्नाभिधीयते । । ३,१.४७ । ।
अस्वशब्दाभिधानास्तु नरसिंहादिजातयः ।
सरूपावयवेवान्या तासु श्रुतिरवस्थिता । । ३,१.४८ । ।

जात्यवस्थापरिच्छेदे संख्या संख्यात्वं एव वा ।
विप्रकर्षेऽपि संसर्गादुपकाराय कल्पते । । ३,१.४९ । ।
लक्षणा शब्दसंस्कारे व्यापारः कार्यसिद्धये ।
संख्याकर्मादिशक्तीनां श्रुतिसाम्येऽपि दृश्यते । । ३,१.५० । ।
न विना संख्यया कश्चित्सत्त्वभूतोऽर्थ उच्यते ।
अतः सर्वस्य निर्देशे संख्या स्यादविवक्षिता । । ३,१.५१ । ।
एकत्वं वा बहुत्वं वा केषां चिदविवक्षितम् ।
तद्धि जात्यभिधानाय द्वित्वं तु स्याद्विवक्षितम् । । ३,१.५२ । ।
यद्येतौ व्याधितौ स्यातां देयं स्यादिदं औषधम् ।
इत्येवं लक्षणेऽर्थस्य द्वित्वं स्यादविवक्षितम् । । ३,१.५३ । ।
एकादिशब्दवाच्यायाः कर्मस्वङ्गत्वं इष्यते ।
संख्यायाः खनति द्वाभ्यां इति रूपाद्धि साश्रिता । । ३,१.५४ । ।
यजेत पशुनेत्यत्र संस्कारस्यापि संभवे ।
यथा जातिस्तथैकत्वं साधनत्वेन गम्यते । । ३,१.५५ । ।
लिङ्गात्तु स्याद्द्वितीयादेस्तदेकत्वं विवक्षितम् ।
एकार्थविषयत्वे च तल्लिङ्गं जातिसंख्ययोः । । ३,१.५६ । ।
अन्यत्राविहितस्यैव स विधिः प्रथमं पशोः ।
क्रियायां अङ्गभावश्च तत्त्वेतस्माद्विवक्षितम् । । ३,१.५७ । ।
ग्रहास्त्वन्यत्र विहिता भिन्नसंख्याः पृथक्पृथक् ।
प्राजापत्या नवेत्येवम्- आदिभेदसमन्विताः । । ३,१.५८ । ।
अङ्गत्वेन प्रतीतानां संमार्गे त्वङ्गिनां पुनः ।
निर्देशं प्रति या संख्या सा कथं स्याद्विवक्षिता । । ३,१.५९ । ।
नान्यत्र विधिरस्तीति संस्कारो नापि चाङ्गिता ।
हेतुः संख्याविवक्षाया यत्नात्सा हि विवक्षिता । । ३,१.६० । ।
संमार्जने विशेषश्च न ग्रहे क्व चिदाश्रितः ।
विहितास्ते च संस्कार्याः सर्वेषां आश्रयस्ततः । । ३,१.६१ । ।
प्रत्याश्रयं समाप्तायां जातावेकेन चेत्क्रिया ।
पशुना न प्रकल्पेत तत्स्यादेव प्रकल्पनम् । । ३,१.६२ । ।
एकेन च प्रसिद्धायां क्रियायां यदि संभवात् ।
पश्वन्तरं उपादेयं उपादानं अनर्थकम् । । ३,१.६३ । ।
यथैवाहितगर्भायां गर्भाधानां अनर्थकम् ।
तथैकेन प्रसिद्धायां पश्वन्तरं अनर्थकम् । । ३,१.६४ । ।
तावतार्थस्य सिद्धत्वादेकत्वस्याव्यतिक्रमम् ।
के चिदिच्छन्ति न त्वत्र संख्याङ्गत्वेन गृह्यते । । ३,१.६५ । ।
द्वितीयादि तु यल्लिङ्गं उक्तन्यायानुवादि तत् ।
न संख्या साधनत्वेन जातिवत्तेन गम्यते । । ३,१.६६ । ।
अन्वयव्यतिरेकाभ्यां संख्याभ्युपगमे सति ।
युक्तं यत्साधनत्वं स्यान्न त्वन्यार्थोपलक्षणम् । । ३,१.६७ । ।
साधनत्वे पदार्थस्य सामर्थ्यं न प्रहीयते ।
संख्याव्यापारधर्मोऽतस्तेन लिङ्गेन गम्यते । । ३,१.६८ । ।
अपूर्वस्य विधेयत्वात्प्राधान्यं अवसीयते ।
विहितस्य परार्थत्वाच्छेशभावः प्रतीयते । । ३,१.६९ । ।
संमार्गस्य विधेयत्वातन्यत्र विहिते ग्रहे ।
विधिवाक्ये श्रुता संख्या लक्षणायां न बाध्यते । । ३,१.७० । ।
विधिवाक्यान्तरे संख्या पशोर्नास्ति विरोधिनी ।
तस्मात्सगुण एवासौ सहैकत्वेन गम्यते । । ३,१.७१ । ।
निर्ज्ञातद्रव्यसंबन्धे यः कर्मण्युपदिश्यते ।
गुनस्तेनार्थिता तस्य द्रव्येणेव प्रतीयते । । ३,१.७२ । ।
कश्चिदेव गुणो द्रव्ये यथा सामर्थ्यलक्षणः ।

आधारोऽपि गुणस्यैवं प्राप्तः सामर्थ्यलक्षणः ।। ३,१.७३ ।।
तयोस्तु पृथगर्थित्वे संबन्धो यः प्रतीयते ।
न तस्मिन्नुपघातोऽस्ति कल्प्यं अन्यन्न चाश्रुतम् ।। ३,१.७४ ।।
क्रियया योऽभिसंबन्धः स श्रुतिप्रापितस्तयोः ।
आश्रयाश्रयिणोर्वाक्यान्नियमस्त्ववतिष्ठते ।। ३,१.७५ ।।
तत्र द्रव्यगुणाभावे प्रत्येकं स्याद्विकल्पनम् ।
श्रुतिप्राप्तो हि संबन्धो बलवान्वाक्यलक्षणात् ।। ३,१.७६ ।।
यदा तु जातिः शक्तिर्वा क्रियां प्रत्युपदिश्यते ।
सामर्थ्यात्संनिधीयेते तत्र द्रव्यगुणौ तदा ।। ३,१.७७ ।।
जातीनां च गुणानां च तुल्येऽङ्गत्वे क्रियां प्रति ।
गुणाः प्रतिनिधीयन्ते छागादीनां न जातयः ।। ३,१.७८ ।।
व्यक्तिशक्तेः समासन्ना जातयो न तथा गुणाः ।
साक्षाद्द्रव्यं क्रियायोगि गुणस्तस्माद्विकल्पते ।। ३,१.७९ ।।
साम्येनान्यतराभावे विकल्पः कैश्चिदिष्यते ।
अतद्गुणोऽतश्छागः स्यान्मेषो वा तद्गुणो भवेत् ।। ३,१.८० ।।
जातेराश्रितसंख्यायाः प्रवृत्तिरुपलभ्यते ।
संख्याविशेषं उत्सृज्य क्वचित्सैव प्रवर्तते ।। ३,१.८१ ।।
पराङ्गभूतं सामान्यं युज्यते द्रव्यसंख्यया ।
स्वार्थं प्रवर्तमानं तु न संख्यां अवलम्बते ।। ३,१.८२ ।।
यजेत पशुनेत्यत्र यज्यर्थायां पशुश्रुतौ ।
कृतार्थैकेन पशुना प्रधानं भवति क्रिया ।। ३,१.८३ ।।
यावतां संभवो यस्य स कुर्यात्तावतां यदि ।
आलम्भनं गुणैस्तेन प्रधानं स्यात्प्रयोजितम् ।। ३,१.८४ ।।
संमृज्यमानतन्त्रे तु ग्रहे यत्र क्रियाश्रुतिः ।
संख्याविशेषग्रहणं नैव तत्राद्रियामहे ।। ३,१.८५ ।।
शिष्यमाणपरे वाक्ये यदेकग्रहणं कृतम् ।
शेषे विशिष्टसंख्येऽपि व्यक्तं तल्लिङ्गदर्शनम् ।। ३,१.८६ ।।
समासप्रत्ययविधौ यथा निपतिता श्रुतिः ।
गुणानां परतन्त्राणां न्यायेनैवोपपद्यते ।। ३,१.८७ ।।
गुणेऽपि नाङ्गीक्रियते प्रधानान्तरसिद्धये ।
संख्या कर्ता तथा कर्मण्यविशिष्टः प्रतीयते ।। ३,१.८८ ।।
यस्यान्यस्य प्रसक्तस्य नियमार्था पुनः श्रुतिः ।
निवृत्तौ चरितार्थत्वात्संख्या तत्राविवक्षिता ।। ३,१.८९ ।।
सरूपसमुदायात्तु विभक्तिर्या विधीयते ।
एकस्तत्रार्थवान्सिद्धः समुदायस्य वाचकः ।। ३,१.९० ।।
प्रत्ययस्य प्रधानस्य समासस्यापि वा विधौ ।
सिद्धः संख्याविवक्षायां सर्वथानुग्रहो गुणे ।। ३,१.९१ ।।
अभेदरूपं सादृश्यं आत्मभूताश्च शक्तयः ।
जातिपर्यायवाचित्वं एषां अप्युपवर्ण्यते ।। ३,१.९२ ।।
दण्डोपादित्सया दण्डं यद्यपि प्रतिपद्यते ।
न तस्मादेव सामर्थ्यात्स दण्डीति प्रतीयते ।। ३,१.९३ ।।
नेच्छानिमित्तादिच्छावानिति ज्ञानं प्रवर्तते ।
तस्मात्सत्यपि सामर्थ्ये बुद्धिरर्थान्तराश्रया ।। ३,१.९४ ।।
स्वभावो व्यपदेश्यो वा सामर्थ्यं वावतिष्ठते ।
सर्वस्यान्ते यतस्तस्माद्व्यवहारो न कल्पते ।। ३,१.९५ ।।
यदा भेदान्परित्यज्य बुद्ध्यैक इव गृह्यते ।
व्यक्त्यात्मैव तदा तत्र बुद्धिरेका प्रवर्तते ।। ३,१.९६ ।।
भेदरूपैरनुस्यूतं यदैकं इव मन्यते ।
समूहावग्रहा बुद्धिर्बहुभ्यो जायते तदा ।। ३,१.९७ ।।

- यदा सहविवक्षायां एकबुद्धिनिबन्धनः ।

बद्धावयवविच्छेदः समुदायोऽभिधीयते । । ३,१.९८ * । ।

- प्रतिक्रियं समाप्तत्वादेको भेदसमन्वितः ।

द्वन्द्वे द्वित्वादिभेदेन तदासावुपगम्यते । । ३,१.९९ * । ।
सकृत्प्रवृत्तावेकत्वं आवृत्तौ सदृशात्मताम् ।
भिन्नात्मकानां व्यक्तीनां भेदापोहात्प्रपद्यते । । ३,१.१०० । ।
अनुप्रवृत्तेति यथा- भिन्ना बुद्धिः प्रतीयते ।
अर्थो व्यावृत्तरूपोऽपि तथा तत्त्वेन गृह्यते । । ३,१.१०१ । ।
सरूपाणां च सर्वेषां न भेदोपनिपातिनः ।
विद्यन्ते वाचकाः शब्दा नापि भेदोऽवधार्यते । । ३,१.१०२ । ।
ज्ञानशब्दार्थविषया विशेषा ये व्यवस्थिताः ।
तेषां दुरवधारत्वाज्ज्ञानाद्येकत्वदर्शनम् । । ३,१.१०३ । ।
ज्ञानेष्वपि यथार्थेषु तथा सर्वेषु जातयः ।
संसर्गदर्शने सन्ति ताश्चार्थस्य प्रसाधिकाः । । ३,१.१०४ । ।
ज्ञेयस्थं एव सामान्यं ज्ञानानां उपकारकम् ।
न जातु ज्ञेयवज्ज्ञानं पररूपेण रूप्यते । । ३,१.१०५ । ।
यथा ज्योतिः प्रकाशेन नान्येनाभिप्रकाश्यते ।
ज्ञानाकारस्तथान्येन न ज्ञानेनोपगृह्यते । । ३,१.१०६ । ।

- न चात्मसमवेतस्य सामान्यस्यावधारणे ।

ज्ञानशक्तिः समर्था स्याज्ज्ञातस्यान्यस्य वस्तुनः । । ३,१.१०७ * । ।

- अयौगपद्ये ज्ञानानां अस्येत्यग्रहणं न च ।

यथोपलब्धि स्मरणं उपलब्धे च जायते । । ३,१.१०८ * । ।
घटज्ञानं इति ज्ञानं घटज्ञानविलक्षणम् ।
घट इत्यपि यज्ज्ञानं विषयोपनिपाति तत् । । ३,१.१०९ । ।
यतो विषयरूपेण ज्ञानरूपं न गृह्यते ।
अर्थरूपविविक्तं च स्वरूपं नावधार्यते । । ३,१.११० । ।

# ३,२ः द्रव्यसमुद्देशः

आत्मा वस्तु स्वभावश्च शरीरं तत्त्वं इत्यपि ।
द्रव्यं इत्यस्य पर्यायास्तच्च नित्यं इति स्मृतम् । । ३,२.१ । ।
सत्यं वस्तु तदाकारैरसत्यैरवधार्यते ।
असत्योपाधिभिः शब्दैः सत्यं एवाभिधीयते । । ३,२.२ । ।
अध्रुवेण निमित्तेन देवदत्तगृहं यथा ।
गृहीतं गृहशब्देन शुद्धं एवाभिधीयते । । ३,२.३ । ।
सुवर्णादि यथा युक्तं स्वैराकारैरपायिभिः ।
रुचकाद्यभिधानानां शुद्धं एवैति वाच्यताम् । । ३,२.४ । ।
आकारैश्च व्यवच्छेदात्सार्वार्थ्यं अवरुध्यते ।
यथैव चक्षुरादीनां सामर्थ्यं नालिकादिभिः । । ३,२.५ । ।
तेष्वाकारेषु यः शब्दस्तथाभूतेषु वर्तते ।
तत्त्वात्मकत्वात्तेनापि नित्यं एवाभिधीयते । । ३,२.६ । ।
न तत्त्वातत्त्वयोर्भेद इति वृद्धेभ्य आगमः ।
अतत्त्वं इति मन्यन्ते तत्त्वं एवाविचारितम् । । ३,२.७ । ।
विकल्परूपं भजते तत्त्वं एवाविकल्पितम् ।
न चात्र कालभेदोऽस्ति कालभेदश्चगृह्यते । । ३,२.८ । ।
यथा विषयधर्माणां ज्ञानेऽत्यन्तं असंभवः ।
तदात्मेव च तत्सिद्धं अत्यन्तं अतदात्मकम् । । ३,२.९ । ।

तथा विकाररूपाणां तत्त्वेऽत्यन्तं असंभवः ।
तदात्मेव च तत्तत्त्वं अत्यम्न्तं अतदात्मकम् । । ३,२.१० । ।
सत्यं आकृतिसंहारे यदन्ते व्यवतिष्ठते ।
तन्नित्यं शब्दवाच्यं तच्छब्दात्तच्च न भिद्यते । । ३,२.११ । ।
न तदस्ति न तन्नास्ति न तदेकं न तत्पृथक् ।
न संसृष्टं विभक्तं वा विकृतं न च नान्यथा । । ३,२.१२ । ।
तन्नास्ति विद्यते तच्च तदेकं तत्पृथक्पृथक् ।
संसृष्टं च विभक्तं च विकृतं तत्तदन्यथा । । ३,२.१३ । ।
तस्य शब्दार्थसंबन्ध- रूपं एकस्य दृश्यते ।
तद्दृश्यं दर्शनं द्रष्टा दर्शने च प्रयोजनम् । । ३,२.१४ । ।
विकारापगमे सत्यं सुवर्णं कुण्डले यथा ।
विकारापगमे सत्यां तथाहुः प्रकृतिं पराम् । । ३,२.१५ । ।
वाच्या सा सर्वशब्दानां शब्दाश्च न पृथक्ततः ।
अपृथक्त्वे च संबन्धस्तयोर्नानात्मनोरिव । । ३,२.१६ । ।
आत्मा परः प्रियो द्वेष्यो वक्ता वाच्यं प्रयोजनम् ।
विरुद्धानि यथैकस्य स्वप्ने रूपाणि चेतसः । । ३,२.१७ । ।
अजन्मनि तथा नित्ये पौर्वापर्यविवर्जिते ।
तत्त्वे जन्मादिरूपत्वं विरुद्धं उपलभ्यते । । ३,२.१८ । ।

## ३.३ः सम्बन्धसमुद्देशः

ज्ञानं प्रयोक्तुर्बाह्योऽर्थः स्वरूपं च प्रतीयते ।
शब्दैरुच्चरितैस्तेषां संबन्धः समवस्थितः । । ३,३.१ । ।
प्रतिपत्तुर्भवत्यर्थे ज्ञाने वा संशयः क्वचित् ।
स्वरूपेषूपलभ्येषु व्यभिचारो न विद्यते । । ३,३.२ । ।
अस्यायं वाचको वाच्य इति षष्ठ्या प्रतीयते ।
योगः शब्दार्थयोस्तत्त्वं अप्यतो व्यपदिश्यते । । ३,३.३ । ।
नाभिधानं स्वधर्मेण संबन्धस्यास्ति वाचकम् ।
अत्यन्तपरतन्त्रत्वाद्रूपं नास्यापदिश्यते । । ३,३.४ । ।
उपकारात्स यत्रास्ति धर्मस्तत्रानुगम्यते ।
शक्तीनां अपि सा शक्तिर्गुणानां अप्यसौ गुणः । । ३,३.५ । ।
तद्धर्मणोस्तु ताच्छब्द्यं संयोगसमवाययोः ।
तयोरप्युपकारार्था नियतास्तदुपाधयः । । ३,३.६ । ।
का चिदेव हि सावस्था कार्यप्रसवसूचिता ।
कस्य चित्केन चिद्यस्यां संयोग उपजायते । । ३,३.७ । ।
निरात्मकानां उत्पत्तौ नियमः क्वचिदेव यः ।
तेनैवाव्यपवर्गश्च प्राप्तभेदे स यत्कृतः । । ३,३.८ । ।
आत्मान्तरस्य येनात्मा तदात्मेवावधार्यते ।
यतश्चैकत्वनानात्वं तत्त्वं नाध्यवसीयते । । ३,३.९ । ।
तां शक्तिं समवायाख्यां शक्तीनां उपकारिणीम् ।
हेदाभेदावतिक्रान्तां अन्यथैव व्यवस्थिताम् । । ३,३.१० । ।
धर्मं सर्वपदार्थानां अतीतः सर्वलक्षणः ।
अनुगृह्णाति संबन्ध इति पूर्वेभ्य आगमः । । ३,३.११ । ।
पदार्थीकृत एवान्यैः सर्वत्राभ्युपगम्यते ।
संबन्धस्तेन शब्दार्थः प्रविभक्तुं न शक्यते । । ३,३.१२ । ।
समवायात्स्व आधारः स्वा च जातिः प्रतीयते ।
एकार्थसमवायात्तु गुणाः स्वाधार एव ये । । ३,३.१३ । ।
द्रव्यत्वसत्तासंयोगाः स्वान्याधारोपबन्धनाः ।
तत्प्रदेशविभागाश्च गुणा द्वित्वादयश्च ये । । ३,३.१४ । ।

के चित्स्वाश्रयसंयुक्ताः के चित्तत्समवायिनः ।
संयुक्तसमवेतेषु समवेतास्तथापरे ।। ३,३.१५ ।।
स्वाश्रयेण तु संयुक्तैः संयुक्तं विभु गम्यते ।
समवायस्य संबन्धो नापरस्तत्र दृश्यते ।। ३,३.१६ ।।
संबन्धस्याविशिष्टत्वान्न चात्र नियमो भवेत् ।
तस्माच्छब्दार्थयोर्नैवं संबन्धः परिकल्प्यते ।। ३,३.१७ ।।
अदृष्टवृत्तिलाभेन यथा संयोग आत्मनः ।
क्व चित्स्वस्वामियोगाख्योऽभेदेऽन्यत्रापि स क्रमः ।। ३,३.१८ ।।
प्राप्तिं तु समवायाख्यां वाच्यधर्मातिवर्तिनीम् ।
प्रयोक्ता प्रतिपत्ता वा न शब्दैरनुगच्छति ।। ३,३.१९ ।।
अवाच्यं इति यद्वाच्यं तदवाच्यतया यदा ।
वाच्यं इत्यवसीयेत वाच्यं एव तदा भवेत् ।। ३,३.२० ।।
अथाप्यवाच्यं इत्येवं, न तद्वाच्यं प्रतीयते ।
विवक्षितास्य यावस्था सैव नाध्यवसीयते ।। ३,३.२१ ।।
तथान्यथा सर्वथा च यस्यावाच्यत्वं उच्यते ।
तत्रापि नैव सावस्था तैः शब्दैः प्रतिषिध्यते ।। ३,३.२२ ।।
न हि संशयरूपेऽर्थे शेषत्वेन व्यवस्थिते ।
अव्युदासे स्वरूपस्य संशयोऽन्यः प्रवर्तते ।। ३,३.२३ ।।
यदा च निर्णयज्ञाने निर्णयत्वेन निर्णयः ।
प्रक्रम्यते तदा ज्ञानं स्वधर्मे नावतिष्ठते ।। ३,३.२४ ।।
सर्वं मिथ्या ब्रवीमीति नैतद्वाक्यं विवक्ष्यते ।
तस्य मिथ्याभिधाने हि प्रक्रान्तोऽर्थो न गम्यते ।। ३,३.२५ ।।
न च वाचकरूपेण प्रवृत्तस्यास्ति वाच्यता ।
प्रतिपाद्यं न तत्तत्र येनान्यत्प्रतिपाद्यते ।। ३,३.२६ ।।
असाधिका प्रतिज्ञेति नेयं एवाभिधीयते ।
यथा, तथास्य धर्मोऽपि नात्र कश्चित्प्रतीयते ।। ३,३.२७ ।।
व्यापारस्यापरो यस्मान्न व्यापारोऽस्ति कश्चन ।
विरोधं अनवस्थां वा तस्मात्सर्वत्र नाश्रयेत् ।। ३,३.२८ ।।
इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।
अनादिरर्थैः शब्दानां संबन्धो योग्यता तथा ।। ३,३.२९ ।।
असाधुरनुमानेन वाचकः कैश्चिदिष्यते ।
वाचकत्वाविशेषे वा नियमः पुण्यपापयोः ।। ३,३.३० ।।
संबन्धशब्दे संबन्धो योग्यतात्रं प्रति योग्यता ।
समयाद्योग्यतासंविन्मातापुत्रादियोगवत् ।। ३,३.३१ ।।
शब्दः कारणं अर्थस्य स हि तेनोपजन्यते ।
तथा च बुद्धिविषयादर्थाच्छब्दः प्रतीयते ।। ३,३.३२ ।।
भोजनाद्यपि मन्यन्ते बुद्ध्यर्थे यदसंभवि ।
बुद्ध्यर्थादेव बुद्ध्यर्थे जाते तदपि दृश्यते ।। ३,३.३३ ।।
अनित्येष्वपि नित्यत्वं अभिधेयात्मना स्थितम् ।
अनित्यत्वं स्वशक्तिर्वा सा च नित्यान्न भिद्यते ।। ३,३.३४ ।।
शब्देनार्थस्य संस्कारो दृष्टादृष्टप्रयोजनः ।
क्रियते सोऽभिसंबन्धं अन्तरेण कथं भवेत् ।। ३,३.३५ ।।
नावश्यं अभिधेयेषु संस्कारः स तथाविधः ।
दृस्यते न च संबन्धस्तथाभूतो विवक्षितः ।। ३,३.३६ ।।
सति प्रत्ययहेतुत्वं संबन्ध उपपद्यते ।
शब्दस्यार्थे यतस्तत्र संबन्धोऽस्तीति गम्यते ।। ३,३.३७ ।।
नित्येऽनित्येऽपि वाप्यर्थे पुरुषेण कथंचन ।
संबन्धोऽकृतसंबन्धैः शब्दैः कर्तुं न शक्यते ।। ३,३.३८ ।।
व्यपदेशे पदार्थानां अन्या सत्तौपचारिकी ।

सर्वावस्थासु सर्वेषां आत्मरूपस्य दर्शिका || ३,३.३९ ||
स्फटिकादि यथा द्रव्यं भिन्नरूपैरुपाश्रयैः |
स्वशक्तियोगात्संबन्धं ताद्रूप्येणेव गच्छति || ३,३.४० ||
तद्वच्छब्दोऽपि सत्तायां अस्यां पूर्वं व्यवस्थितः |
धर्मैरुपैति संबन्धं अविरोधिविरोधिभिः || ३,३.४१ ||
एवं च प्रतिषेध्येषु प्रतिषेधप्रक्ल्प्तये |
आश्रितेषूपचारेण प्रतिषेधः प्रवर्तते || ३,३.४२ ||
आत्मलाभस्य जन्माख्या सता लभ्यं च लभ्यते |
यदि सज्जायते कस्मादथासज्जायते कथम् || ३,३.४३ ||
सतो हि गन्तुर्गमनं, सति गम्ये प्रवर्तते |
गन्तृवच्चेन्न जन्मार्थो, न चेत्तद्वन्न जायते || ३,३.४४ ||
उपचर्य तु कर्तारं अभिधानप्रवृत्तये |
पुनश्च कर्मभावेन तां क्रियां च तदाश्रयाम् || ३,३.४५ ||
अथोपचारसत्तैवं विधेयस्तत्र लादयः |
जन्मना तु विरोधित्वान्मुख्या सत्ता न विद्यते || ३,३.४६ ||
आत्मानं आत्मना बिभ्रदस्तीति व्यपदिश्यते |
अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः || ३,३.४७ ||
प्राक्च सत्ताभिसंबन्धान्मुख्या सत्ता कथं भवेत् |
असंश्च नास्तेः कर्ता स्यादुपचारस्तु पूर्ववत् || ३,३.४८ ||
तस्माद्भिन्नेषु धर्मेषु विरोधिष्वविरोधिनीम् |
विरोधिख्यापनायैव शब्दैस्तैस्तैरुपाश्रिताम् || ३,३.४९ ||
अभिन्नकालां अर्थेषु भिन्नकालेष्ववस्थिताम् |
प्रवृत्तिहेतुं सर्वेषां शब्दानां औपचारिकीम् || ३,३.५० ||
एतां सत्तां पदार्थो हि न कश्चिदतिवर्तते |
सा च संप्रतिसत्तायाः पृथग्भाश्ये निदर्शिता || ३,३.५१ ||
प्रदेशस्यैकदेशं वा परतो वा निरूपणम् |
विपर्ययं अभावं वा व्यवहारोऽनुवर्तते || ३,३.५२ ||
यथेन्द्रियस्य वैगुण्यान्मात्राध्यारोपवानिव |
जायते प्रत्ययोऽर्थेभ्यस्तथैवोद्देशजा मतिः || ३,३.५३ ||
अकृत्स्नविषयाभासं शब्दः प्रत्ययं आश्रितः |
अर्थं आहान्यरूपेण स्वरूपेणानिरूपितम् || ३,३.५४ ||
रूपणव्यपदेशाभ्यां लौकिके वर्त्मनि स्थितौ |
ज्ञानं प्रत्यभिलापं च सदृशौ बालपण्डितौ || ३,३.५५ ||
सर्वार्थरूपता शुद्धिर्ज्ञानस्य निरुपाश्रया |
ततोऽप्यस्य परां शुद्धिं एके प्राहुररूपिकाम् || ३,३.५६ ||
उपप्लवो हि ज्ञानस्य बाह्याकारानुपातिता |
कालुष्यं इव तत्तस्य संसर्गे व्यतिभेदजम् || ३,३.५७ ||
यथा च ज्ञानं आलेखादशुद्धौ व्यवतिष्ठते |
तथोपाश्रयवानर्थः स्वरूपाद्विप्रकृष्यते || ३,३.५८ ||
एवं अर्थस्य शब्दस्य ज्ञानस्य च विपर्यये |
भावाभावावभेदेन व्यवहारानुपातिनौ || ३,३.५९ ||
यथा भावं उपाश्रित्य तदभावोऽनुगम्यते |
तथाभावं उपाश्रित्य तद्भावोऽप्यनुगम्यते || ३,३.६० ||
नाभावो जायते भावो नैति भावोऽनुपाख्यताम् |
एकस्मादात्मनोऽनन्यौ भावाभावौ विकल्पितौ || ३,३.६१ ||
अभावस्यानुपाख्यत्वात्कारणं न प्रसाधकम् |
सोपाख्यस्य तु भावस्य कारणं किं करिश्यति || ३,३.६२ ||
तस्मात्सर्वं अभावो वा भावो वा सर्वं इष्यते |
न त्ववस्थान्तरं किं चिदेकस्मात्सत्यतः स्थितम् || ३,३.६३ ||

तस्मान्नाभावं इच्छन्ति ये लोके भाववादिनः ।
अभाववादिनो वापि न भावं तत्त्वलक्षणम् । । ३,३.६४ । ।
अद्वये चैव सर्वस्मिन्स्वभावादेकलक्षणे ।
परिकल्पेषु मर्यादा विचित्रैवोपलभ्यते । । ३,३.६५ । ।
चतस्रो हि यथावस्था निरुपाख्ये प्रकल्पिताः ।
एवं द्वैविध्यं अप्येतद्भावाभावव्यपाश्रयम् । । ३,३.६६ । ।
अविरोधी विरोधी वा सन्नसन्वापि युक्तितः ।
क्रमवानक्रमो वापि नाभाव उपपद्यते । । ३,३.६७ । ।
अविरोधी विरोधी वा सन्नसन्वापि तत्त्वतः ।
क्रमवानक्रमो वापि तेन भावो न विद्यते । । ३,३.६८ । ।
अभावे त्रिषु कालेषु न भेदस्यास्ति संभवः ।
तस्मिन्नसति भावेऽपि त्रैकाल्यं नावतिष्ठते । । ३,३.६९ । ।
आत्मतत्त्वपरित्यागः परतो नोपपद्यते ।
आत्मतत्त्वं तु परतः स्वतो वा नोपकल्पते । । ३,३.७० । ।
तत्त्वे विरोधो नानात्व उपकारो न कश्चन ।
तत्त्वान्यत्वपरित्यागे व्यवहारो निवर्तते । । ३,३.७१ । ।
यत्र द्रष्टा च दृश्यं च दर्शनं चाविकल्पितम् ।
तस्यैवार्थस्य सत्यत्वं श्रितास्त्रय्यन्तवेदिनः । । ३,३.७२ । ।
सामान्यं वा विशेषं वा यस्मादाहुर्विशेषवत् ।
शब्दास्तस्मादसत्येषु भेदेष्वेव व्यवस्थिताः । । ३,३.७३ । ।
न ह्यभावस्य सद्भावे भावस्यात्मा प्रहीयते ।
न चाभावस्य नास्तित्वे भावस्यात्मा प्रसूयते । । ३,३.७४ । ।
न शाबलेयस्यास्तित्वं बाहुलेयस्य बाधकम् ।
न शाबलेयो नास्तीति बाहुलेयः प्रकल्पते । । ३,३.७५ । ।
अभावो यदि वस्तु स्यात्तत्रेयं स्यात्विचारणा ।
ततश्च तदभावेऽपि स्याद्विचार्यं इदं पुनः । । ३,३.७६ । ।
अवस्तु स्यादतीतं यद्व्यवहारस्य गोचरम् ।
तत्र वस्तुगतो भेदो न निर्वचनं अर्हति । । ३,३.७७ । ।
अपदेऽर्थे पदन्यासः कारणस्य न विद्यते ।
अथ च प्रागसद्भावः कारणे सति दृष्यते । । ३,३.७८ । ।
का तस्य प्रागवस्थेति वस्त्वाश्रितं इदं पुनः ।
प्रागवस्थेति न ह्येतद्द्वयं अप्यस्त्यवस्तुनि । । ३,३.७९ । ।
न चोर्ध्वं अस्ति नास्तीति वचनायानिबन्धनम् ।
अलं स्यादपदस्थानं एतद्वाचः प्रचक्षते । । ३,३.८० । ।
अत्यद्भुता त्वियं वृत्तिर्यदभागं यदक्रमम् ।
भावानां प्रागभूतानां आत्मतत्त्वं प्रकाशते । । ३,३.८१ । ।
विकल्पोत्थापितेनैव सर्वो भावेन लौकिकः ।
मुख्येनेव पदार्थेन व्यवहारो विधीयते । । ३,३.८२ । ।
भावशक्तिं अतश्चैनां मन्यन्ते नित्यवादिनः ।
भावं एव क्रमं प्राहुर्न भावादपरः क्रमः । । ३,३.८३ । ।
क्रमान्न यौगपद्यस्य कश्चिद्भेदोऽस्ति तत्त्वतः ।
यथैव भावान्नाभावः कश्चिदन्योऽवसीयते । । ३,३.८४ । ।
कालस्याप्यपरं कालं निर्दिशन्त्येव लौकिकाः ।
न च निर्देशमात्रेण व्यतिरेकोऽनुगम्यते । । ३,३.८५ । ।
आधारं कल्पयन्बुद्ध्या नाभावे व्यवतिष्ठते ।
अवस्तुष्वपि नोत्प्रेक्षा कस्य चित्प्रतिबध्यते । । ३,३.८६ । ।
तस्माच्छक्तिविभागेन नित्यः सदसदात्मकः ।

एकोऽर्थः शब्दवाच्यत्वे बहुरूपः प्रकाशते । । ३,३.८७ । ।
व्यवहारश्च लोकस्य पदार्थैः परिकल्पितैः ।
शास्त्रे पदार्थः कार्यार्थं लौकिकः प्रविभज्यते । । ३,३.८८ । ।

## ३,४ः भूयोद्रव्यसमुद्देशः

संसर्गरूपात्संभूताः संविद्रूपादपोद्धृताः ।
शास्त्रे विभक्ता वाक्यार्थात्प्रकृतिप्रत्ययार्थवत् । । ३,४.१ । ।
निमित्तभूताः साधुत्वे शास्त्रादनुमितात्मकाः ।
के चित्पदार्था वक्ष्यन्ते संक्शेपेण यथागमम् । । ३,४.२ । ।
वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यं इत्युच्यते सोऽर्तो भेद्यत्वेन विवक्शितः । । ३,४.३ । ।

## ३,५ः गुणसमुदेशः

संसर्गि भेदकं यद्यत्सव्यापारं प्रतीयते ।
गुणत्वं परतन्त्रत्वात्तस्य शास्त्र उदाहृतम् । । ३,५.१ । ।
द्रव्यस्याव्यपदेशस्य य उपादीयते गुणः ।
भेदको व्यपदेशाय तत्प्रकर्षोऽभिधीयते । । ३,५.२ । ।
सर्वस्यैव प्रधानस्य न विना भेदहेतुना ।
प्रकर्षो विद्यते नापिऽशब्दस्योपैति वाच्यताम् । । ३,५.३ । ।
विद्यमानाः प्रधानेषु न सर्वे भेदहेतवः ।
विशेषशब्दैरुच्यन्ते व्यावृत्तार्थाभिधायिभिः । । ३,५.४ । ।
वस्तूपलक्षणे तत्र विशेषो व्यापृतो यदि ।
प्रकर्षो नियमाभावात्स्यादविज्ञातहेतुकः । । ३,५.५ । ।
सर्वं च सर्वतोऽवश्यं नियमेन प्रकृष्यते ।
संसर्गिणा निमित्तेन निकृष्टेनाधिकेन वा । । ३,५.६ । ।
नापेक्षते निमित्तं च प्रकर्षे व्यापृतं यदि ।
द्रव्यस्य स्यादुपादानं प्रकर्षं प्रत्यनर्थकम् । । ३,५.७ । ।
सव्यापारो गुणस्तस्मात्स्वप्रकर्षनिबन्धनः ।
द्रव्यात्मानं भिनत्त्येव स्वप्रकर्षं निवेशयन् । । ३,५.८ । ।
अरूपं पररूपेण द्रव्यं आख्यायते यथा ।
अप्रकर्षं प्रकर्षेण गुणस्याविश्यते तथा । । ३,५.९ । ।

## ३,६ः दिक्समुद्देशः

दिक्साधनं क्रिया काल इति वस्त्वभिधायिनः ।
शक्तिरूपे पदार्थानां अत्यन्तं अनवस्थिताः । । ३,६.१ । ।
व्यतिरेकस्य यो हेतुरवधिप्रतिपाद्ययोः ।
ऋज्वित्येवं यतोऽन्येन विना बुद्धिः प्रवर्तते । । ३,६.२ । ।
कर्मनो जातिभेदानां अभिव्यक्तिर्यदाश्रया ।
सा स्वैरुपाधिभिर्भिन्ना शक्तिर्दिगिति कथ्यते । । ३,६.३ । ।
परापरत्वे मूर्तिनां देशभेदनिबन्धने ।
तत एव प्रकल्पेते क्रमरूपे तु कालतः । । ३,६.४ । ।
आकाशस्य प्रदेशेन भागैश्चान्यैः पृथक्पृथक् ।
सा संयोगविभागानां उपाधित्वाय कल्पते । । ३,६.५ । ।
दिशो व्यवस्था देशानां दिग्व्यवस्था न विद्यते ।
शक्तयः खलु भावानां उपकारप्रभाविताः । । ३,६.६ । ।
प्रत्यस्तरूपा भावेषु दिक्पूर्वेत्यभिधीयते ।
पूर्वबुद्धिर्यतो दिक्सा समाख्यामात्रं अन्यथा । । ३,६.७ । ।

स्वाङ्गाद्व्यवस्था या लोके न तस्यां नियता दिशः ।
प्रत्यङ्मुखस्य यत्पश्चात्तत्पुरस्ताद्विपर्यये ।। ३,६.८ ।।
देशव्यवस्थानियमो दिक्षु न व्यवतिष्ठते ।
रूढं अप्यपरत्वेन पूर्वं इत्यभिधीयते ।। ३,६.९ ।।
अतो भाषितपुंस्कत्वात्पुंवद्भावो न सिध्यति ।
अस्मिन्नर्थे न शब्देन प्रसवः क्व चिदुच्यते ।। ३,६.१० ।।
दिक्शक्तेरभिधाने तु नियतं दिशि दर्शनम् ।
पूर्वादिनां यथा षष्टेर्जीवितस्यावधारणे ।। ३,६.११ ।।
छायाभाभ्यां नगादीनां भागभेदः प्रकल्पते ।
अतद्धर्मसु भावेषु भागभेदो न कल्पते ।। ३,६.१२ ।।
परमाणोरभागस्य दिशा भागो विधीयते ।
भागप्रकल्पनाशक्तिं प्रथमां तां प्रचक्षते ।। ३,६.१३ ।।
अदेशाश्चाप्यभागाश्च निष्क्रमा निरुपाश्रयाः ।
भावाः संसर्गिरूपात्तु शक्तिभेदः प्रकल्पते ।। ३,६.१४ ।।
निर्भागात्मकता तुल्या परमाणोर्घटस्य च ।
भागः शक्त्यन्तरं तत्र परिमाणं च यत्तयोः ।। ३,६.१५ ।।
यतः प्रकल्पते भेदो भेदस्तत्रापि दृश्यते ।
अदृष्टोपरतिं भेदं अतोऽयुक्ततरं विदुः ।। ३,६.१६ ।।
सर्वत्र तस्य कार्यस्य दर्शनाद्विभुरिष्यते ।
विभुत्वं एतदेवाहुरन्यः कायवतां विधिः ।। ३,६.१७ ।।
चैतन्यवत्स्थिता लोके दिक्कालपरिकल्पना ।
प्रकृतिं प्राणिनां तां हि कोऽन्यथा स्थापयिष्यति ।। ३,६.१८ ।।
संकरो व्यवहाराणां प्रकृतेः स्याद्विपर्यये ।
तस्मात्त्यजन्निमान्भावान्पुनरेवावलम्बते ।। ३,६.१९ ।।
तस्यास्तु शक्तेः पूर्वादि- भेदो भावान्तराश्रयः ।
भिन्ना दिक्तेन भेदेन भेदायैवोपकल्पते ।। ३,६.२० ।।
अवधित्वेन चापेक्षा- योगे दिग्लक्षणो विधिः ।
पूर्वं अस्येति षष्ठ्येव दृष्टा धर्मान्तराश्रये ।। ३,६.२१ ।।
पूर्वादिनां विपर्यासोऽदृष्टश्चावध्यसंकरे ।
ऋज्वेतदस्येत्येतच्च लिङ्गं न व्यतिकीर्यते ।। ३,६.२२ ।।
अन्तःकरणधर्मो वा बहिरेवं प्रकाशते ।
अस्यां त्वन्तर्बहिर्भावः प्रक्रियायां न विद्यते ।। ३,६.२३ ।।
एकत्वं आसां शक्तीनां नानात्वं वेति कल्पने ।
अवस्तुपतिते ज्ञात्वा सत्यतो न परामृशेत् ।। ३,६.२४ ।।
विकल्पातीततत्त्वेषु संकेतोपनिबन्धनाः ।
भावेषु व्यवहारा ये लोकस्तत्रानुगम्यते ।। ३,६.२५ ।।
नैकत्वं अस्त्यनानात्वं विनैकत्वेन नेतरत् ।
परमार्थे तयोरेष भेदोऽत्यन्तं न विद्यते ।। ३,६.२६ ।।
न शक्तीनां तथा भेदो यथा शक्तिमतां स्थितिः ।
न च लौकिकं एकत्वं तासां आत्मसु विद्यते ।। ३,६.२७ ।।
नैकत्वं व्यवतिष्ठेत नानात्वं चेन्न कल्पयेत् ।
नानात्वं चावहीयेत यद्येकत्वं न कल्पयेत् ।। ३,६.२८ ।।

## ३,७ः साधनसमुद्देशः

स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे ।
क्रियाणां अभिनिष्पत्तौ सामर्थ्यं साधनं विदुः ।। ३,७.१ ।।
शक्तिमात्रासमूहस्य विश्वस्यानेकधर्मणः ।
सर्वदा सर्वथा भावात्क्व चित्किं चिद्विवक्ष्यते ।। ३,७.२ ।।

साधनव्यवहारश्च बुद्ध्यवस्थानिबन्धनः ।
सन्नसन्वार्थरूपेषु भेदो बुद्ध्या प्रकल्प्यते । । ३,७.३ । ।
बुद्ध्या समीहितैकत्वान्पञ्चालान्कुरुभिर्यदा ।
पुनर्विभजते वक्ता तदापायः प्रतीयते । । ३,७.४ । ।
शब्दोपहितरूपांश्च बुद्धेर्विषयतां गतान् ।
प्रत्यक्षं इव कंसादीन्साधनत्वेन मन्यते । । ३,७.५ । ।
बुद्धिप्रवृत्तिरूपं च समारोप्याभिधातृभिः ।
अर्थेषु शक्तिभेदानां क्रियते परिकल्पना । । ३,७.६ । ।
व्यक्तौ पदार्थे शब्दादेर्जन्यमानस्य कर्मणः ।
साधनत्वं तथा सिद्धं बुद्धिरूपप्रकल्पितम् । । ३,७.७ । ।
स्वतन्त्रपरतन्त्रत्वे क्रमरूपं च दर्शितम् ।
निरीहेष्वपि भावेषु कल्पनोपनिबन्धनम् । । ३,७.८ । ।
शक्तयः शक्तिमन्तश्च सर्वे संसर्गवादिनाम् ।
भावास्तेष्वस्वशब्देषु साधनत्वं निरूप्यते । । ३,७.९ । ।
घटस्य दृशिकर्मत्वे महत्त्वादीनि साधनम् ।
रूपस्य दृशिकर्मत्वे रूपत्वादीनि साधनम् । । ३,७.१० । ।
स्वैः सामान्यविशेषैश्च शक्तिमन्तो रसादयः ।
नियतग्रहणा लोके शक्तयस्तास्तथाश्रयैः । । ३,७.११ । ।
इन्द्रियार्थमनःकर्तृ- संबन्धः साधनं क्व चित् ।
यद्यदा यदनुग्राहि तत्तदा तत्र साधनम् । । ३,७.१२ । ।
स्वशब्दैरभिधाने तु स धर्मो नाभिधीयते ।
विभक्त्यादिभिरेवासावुपकारः प्रतीयते । । ३,७.१३ । ।
निमित्तभावो भावानां उपकारार्थं आश्रितः ।
नतिरावर्जनेत्येवं सिद्धः साधनं इष्यते । । ३,७.१४ । ।
स तेभ्यो व्यतिरिक्तो वा तेषां आत्मैव वा तथा ।
व्यतिरेकं उपाश्रित्य साधनत्वेन कल्प्यते । । ३,७.१५ । ।
संदर्शनं प्रार्थनायां व्यवसाये त्वनन्तरा ।
व्यवसायस्तथारम्भे साधनत्वाय कल्पते । । ३,७.१६ । ।
पूर्वस्मिन्या क्रिया सैव परस्मिन्साधनं मता ।
संदर्शने तु चैतन्यं विशिष्टं साधनं विदुः । । ३,७.१७ । ।
निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके ।
व्यापारभेदापेक्षायां करणत्वादिसंभवः । । ३,७.१८ । ।
पुत्रस्य जन्मनि यथा पित्रोः कर्तृत्वं उच्यते ।
अयं अस्यां इयं त्वस्मादिति भेदो विवक्षया । । ३,७.१९ । ।
गुणक्रियाणां कर्तारः कर्त्रा न्यक्कृतशक्तयः ।
न्यक्तायां अपि संपूर्णैः स्वैर्व्यापारैः समन्विताः । । ३,७.२० । ।
करणत्वादिभिर्ज्ञाताः क्रियाभेदानुपातिभिः ।
स्वातन्त्र्यं उत्तरं लब्ध्वा प्रधाने यान्ति कर्तृताम् । । ३,७.२१ । ।
यथा राज्ञा नियुक्तेषु योद्धृत्वं योद्धृषु स्थितम् ।
तेषु वृत्तौ तु लभते राजा जयपराजयौ । । ३,७.२२ । ।
तथा कर्त्रा नियुक्तेषु सर्वेष्वेकार्थकारिषु ।
कर्तृत्वं करणत्वादेरुत्तरं न विरुध्यते । । ३,७.२३ । ।
अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते ।
आश्रितावधिभावं तु लक्षणे लक्षणं विदुः । । ३,७.२४ । ।
द्रव्यादिविषयो हेतुः कारकं नियतक्रियम् ।
कर्ता कर्त्रन्तरापेक्षः क्रियायां हेतुरिष्यते । । ३,७.२५ । ।
क्रियायै करणं तस्य दृष्टः प्रतिनिधिस्तथा ।
हेत्वर्था तु क्रिया तस्मान्न स प्रतिनिधीयते । । ३,७.२६ । ।
प्रातिलोम्यानुलोम्याभ्यां हेतुरर्थस्य साधकः ।

तादर्थ्यं आनुलोम्येन हेतुत्वानुगतं तु तत् । । ३,७.२७ । ।
सर्वत्र सहजा शक्तिर्यावद्द्रव्यं अवस्थिता ।
क्रियाकाले त्वभिव्यक्तेराश्रयादुपकारिणी । । ३,७.२८ । ।
कुड्यस्यावरणे शक्तिरस्यादीनां विदारणे ।
सर्वदा स तु सन्धर्मः क्रियाकाले निरूप्यते । । ३,७.२९ । ।
स्वा"न्गसंयोगिनः पाशा दैत्यानां वारुणा यथा ।
व्यज्यन्ते विजिगीषूणां द्रव्याणां शक्तयस्तथा । । ३,७.३० । ।
तैक्ष्ण्यगौरवकाठिन्य- संस्थानैः स्वैरसिर्यदा ।
छेद्यं प्रति व्याप्रियते शक्तिमान्गृह्यते तदा । । ३,७.३१ । ।
प्रा"न्निमित्तान्तरोद्भूतं क्रियायाः कैश्चिदिष्यते ।
साधनं सहजं कैश्चित्क्रियान्यैः पूर्वं इष्यते । । ३,७.३२ । ।
प्रवृत्तिरेव प्रथमं क्व चिदप्यनपाश्रिता ।
शक्तीरेकाधिकरणे स्रोतोवदपकर्षति । । ३,७.३३ । ।
अपूर्वं कालशक्तिं वा क्रियां वा कालं एव वा ।
तं एवम्लक्सनं भावं के चिदाहुह्कथं च न । । ३,७.३४ । ।
नित्याः षट्शक्तयोऽअन्येषां भेदाभेदसमन्विताः ।
क्रियासंसिद्धयेऽर्थेषु जातिवत्समवस्थिताः । । ३,७.३५ । ।
द्रव्याकारादिभेदेन ताश्चापरिमिता इव ।
दृश्यन्ते तत्त्वं आसां तु षट्शक्तीर्नातिवर्तते । । ३,७.३६ । ।
निमित्तभेदादेकैव भिन्ना शक्तिः प्रतीयते ।
षोढा कर्तृत्वं एवाहुस्तत्प्रवृत्तेर्निबन्धनम् । । ३,७.३७ । ।
तत्त्वे वा व्यतिरेके वा व्यतिरिक्तं तदुच्यते ।
शब्दप्रमाणको लोकः स शास्त्रेणानुगम्यते । । ३,७.३८ । ।
परमार्थे तु नैकत्वं पृथक्त्वाद्भिन्नलक्षणम् ।
पृथक्त्वैकत्वरूपेण तत्त्वं एव प्रकाशते । । ३,७.३९ । ।
यत्पृथक्त्वं असंदिग्धं तदेकत्वान्न भिद्यते ।
यदेकत्वं असंदिग्धं तत्पृथक्त्वान्न भिद्यते । । ३,७.४० । ।
द्यौः क्षमा वायुरादित्यः सागराः सरितो दिशः ।
अन्तःकरणतत्त्वस्य भागा बहिरवस्थिताः । । ३,७.४१ । ।
कालविच्छेदरूपेण तदेवैकं अवस्थितम् ।
स ह्यपूर्वापरो भावः क्रमरूपेण लक्ष्यते । । ३,७.४२ । ।
दृष्टो ह्यव्यतिरेकेऽपि व्यतिरेकोऽन्वयेऽसति ।
वृक्षाद्यर्थान्वयस्तस्माद्विभक्त्यर्थोऽन्य इष्यते । । ३,७.४३ । ।
सामान्यं कारकं तस्य सप्ताद्या भेदयोनयः ।
षट्कर्माख्यादिभेदेन शेषभेदस्तु सप्तमी । । ३,७.४४ । ।
[अथ कर्माधिकारः]
निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम् ।
तत्रेप्सिततमं कर्म चतुर्धान्यत्तु कल्पितम् । । ३,७.४५ । ।
औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम् ।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम् । । ३,७.४६ । ।
सती वाविद्यमाना वा प्रकृतिः परिणामिनी ।
यस्य नाश्रियते तस्य निर्वर्त्यत्वं प्रचक्षते । । ३,७.४७ । ।
प्रकृतेस्तु विवक्षायां विकार्यं कैश्चिदन्यथा ।
निर्वर्त्यं च विकार्यं च कर्म शास्त्रे प्रदर्शितम् । । ३,७.४८ । ।
यदसज्जायते सद्वा जन्मना यत्प्रकाश्यते ।
तन्निर्वर्त्यं विकार्यं च कर्म द्वेधा व्यवस्थितम् । । ३,७.४९ । ।
प्रकृत्युच्छेदसंभूतं किं चित्काष्ठादिभस्मवत् ।
किं चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् । । ३,७.५० । ।
क्रियाकृता विशेषाणां सिद्धिर्यत्र न गम्यते ।

दर्शनादनुमानाद्वा तत्प्राप्यं इति कथ्यते । । ३,७.५१ । ।
विशेषलाभः सर्वत्र विद्यते दर्शनादिभिः ।
केषां चित्तदभिव्यक्ति- सिद्धिर्दृष्टिविषादिषु । । ३,७.५२ । ।
आभासोपगमो व्यक्तिः सोढत्वं इति कर्मणः ।
विशेषाः प्राप्यमाणस्य क्रियासिद्धौ व्यवस्थिताः । । ३,७.५३ । ।
निर्वर्त्यादिषु तत्पूर्वं अनुभूय स्वतन्त्रताम् ।
कर्त्रन्तराणां व्यापारे कर्म संपद्यते ततः । । ३,७.५४ । ।
तद्व्यापारविवेकेऽपि स्वव्यापारे व्यवस्थितम् ।
कर्मापदिष्टांल्लभते क्व चिच्छास्त्राश्रयान्विधीन् । । ३,७.५५ । ।
निवृत्तप्रेषणं कर्म स्वक्रियावयवे स्थितम् ।
निवर्तमाने कर्मत्वे स्वे कर्तृत्वेऽवतिष्ठते । । ३,७.५६ । ।
तानि धात्वन्तराण्येव पचिसिध्यतिवद्विदुः ।
भेदेऽपि तुल्यरूपत्वादेकत्वपरिकल्पना । । ३,७.५७ । ।
एकदेशे समूहे च व्यापाराणां पचादयः ।
स्वभावतः प्रवर्तन्ते तुल्यरूपसमन्विताः । । ३,७.५८ । ।
न्यग्भावना न्यग्भवनं रुहौ शुद्धे प्रतीयते ।
न्यग्भावना न्यग्भवनं ण्यन्तेऽपि प्रतिपद्यते । । ३,७.५९ । ।
अवस्थां पञ्चमीं आहुर्ण्यन्ते तां कर्मकर्तरि ।
निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते । । ३,७.६० । ।
ब्रवीति पचतेरर्थं सिध्यतिर्न विना णिचा ।
स ण्यन्तः पचतेरर्थे प्राकृते व्यवतिष्ठते । । ३,७.६१ । ।
केषां चिद्देवदत्तादेर्व्यापारो यः सकर्मके ।
स विना देवदत्तादेः कटादिषु विवक्ष्यते । । ३,७.६२ । ।
निवृत्तप्रेषणं कर्म स्वस्य कर्तुः प्रयोजकम् ।
प्रेषणान्तरसंबन्धे ण्यन्ते लेनाभिधीयते । । ३,७.६३ । ।
सदृशादिषु यत्कर्म- कर्तृत्वं प्रतिपद्यते ।
आपत्त्यापादने तत्र विषयत्वं प्रति क्रिये । । ३,७.६४ । ।
कुतश्चिदाहृत्य पदं एवं च परिकल्पने ।
कर्मस्थभावकत्वं स्याद्दर्शनाद्यभिधायिनाम् । । ३,७.६५ । ।
विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकाश्यते । । ३,७.६६ । ।
कालभावाध्वदेशानां अन्तर्भूतक्रियान्तरैः ।
सर्वैरकर्मकैर्योगे कर्मत्वं उपजायते । । ३,७.६७ । ।
आधारत्वं इव प्राप्तास्ते पुनर्द्रव्यकर्मसु ।
कालादयो भिन्नकक्ष्यं यान्ति कर्मत्वं उत्तरम् । । ३,७.६८ । ।
अतस्तैः कर्मभिर्धातुर्युक्तोऽद्रव्यैरकर्मकः ।
लस्य कर्मणि भावे च निमित्तत्वाय कल्पते । । ३,७.६९ । ।
सर्वं चाकथितं कर्म भिन्नकक्ष्यं प्रतीयते ।
धात्वर्थोद्देशभेदेन तन्नेप्सिततमं किल । । ३,७.७० । ।
प्रधानकर्म कथितं यत्क्रियायाः प्रयोजकम् ।
तत्सिद्धये क्रियायुक्तं अन्यत्त्वकथितं स्मृतम् । । ३,७.७१ । ।
दुह्यादिवन्नयत्यादौ कर्मत्वं अकथाश्रयम् ।
आख्यातानुपयोगे तु नियमाच्छेष इष्यते । । ३,७.७२ । ।
अन्तर्भूतणिजर्थानां दुह्यादीनां णिजन्तवत् ।
सिद्धं पूर्वेण कर्मत्वं णिजन्तनियमस्तथा । । ३,७.७३ । ।
करणस्य स्वकक्ष्यायां न प्रकर्षाश्रयो यथा ।
कर्मणोऽपि स्वकक्ष्यायां न स्यादतिशयस्तथा । । ३,७.७४ । ।
कर्मणस्त्वाप्तुं इष्टत्व आश्रितेऽतिशयो यतः ।
आश्रीयते ततोऽत्यन्तं भेदः पूर्वेण कर्मणा । । ३,७.७५ । ।

णिजन्ते च यथा कर्ता सक्रियः सन्प्रयुज्यते ।
न दुह्यादौ तथा कर्ता निष्क्रियोऽपि प्रयुज्यते ।। ३,७.७६ ।।
भेदवाक्यं तु यन्ण्यन्ते नीदुहिप्रकृतौ च यत् ।
शब्दान्तरत्वान्नैवास्ति संस्पर्शस्तस्य धातुना ।। ३,७.७७ ।।
यथैवैकं अपादानं शास्त्रे भेदेन दर्शितम् ।
तथैकं एव कर्मापि भेदेन प्रतिपादितम् ।। ३,७.७८ ।।
निर्वर्त्यो वा विकार्यो वा प्राप्यो वा साधनाश्रयः ।
क्रियाणां एव साध्यत्वात्सिद्धरूपोऽभिधीयते ।। ३,७.७९ ।।
अहितेषु यथा लौल्यात्कर्तुरिच्छोपजायते ।
विषादिषु भयादिभ्यस्तथैवासौ प्रवर्तते ।। ३,७.८० ।।
प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानं अनुरुध्यते ।। ३,७.८१ ।।
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
यदा गुणे तदा तद्वदनुक्तापि प्रकाशते ।। ३,७.८२ ।।
पचावनुक्तं यत्कर्म क्त्वान्ते भावाभिधायिनि ।
भुजौ शक्त्यन्तरेऽप्युक्ते तत्तद्धर्म प्रकाशते ।। ३,७.८३ ।।
इषेश्च गमिसंस्पर्शाद्ग्रामे यो लो विधीयते ।
तत्रेषिणैव निर्भोगः क्रियते गमिकर्मणः ।। ३,७.८४ ।।
पक्त्वा भुज्यत इत्यत्र केषां चिन्न व्यपेक्षते ।
ओदनं पचतिः सोऽसावनुमानात्प्रतीयते ।। ३,७.८५ ।।
तथाभिनिविशौ कर्म यत्ति"नन्तेऽभिधीयते ।
क्त्वान्तेऽधिकरणत्वेऽपि न तत्रेच्छन्ति सप्तमीम् ।। ३,७.८६ ।।
यन्निर्वृत्ताश्रयं कर्म प्राप्तेरप्रचितं पुनः ।
भक्ष्यादिविषयापत्त्या भिद्यमानं तदीप्सितम् ।। ३,७.८७ ।।
धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ।। ३,७.८८ ।।
भेदा य एते चत्वारः सामान्येन प्रदर्शिताः ।
ते निमित्तादिभेदेन भिद्यन्ते बहुधा पुनः ।। ३,७.८९ ।।
[इति कर्माधिकारः]
[अथ करणाधिकारः]
क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम् ।। ३,७.९० ।।
वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ।। ३,७.९१ ।।
करणेषु तु संस्कारं आरभन्ते पुनः पुनः ।
विनियोगविशेषांश्च प्रधानस्य प्रसिद्धये ।। ३,७.९२ ।।
स्वकक्ष्यासु प्रकर्षश्च करणानां न विद्यते ।
आश्रितातिशयत्वं तु परतस्तत्र लक्षणम् ।। ३,७.९३ ।।
स्वातन्त्र्येऽपि प्रयोक्तार आरादेवोपकुर्वते ।
करणेन हि सर्वेषां व्यापारो व्यवधीयते ।। ३,७.९४ ।।
क्रियासिद्धौ प्रकर्षोऽयं न्यग्भावस्त्वेव कर्तरि ।
सिद्धौ सत्यां हि सामान्यं साधकत्वं प्रकृष्यते ।। ३,७.९५ ।।
अस्यादीनां तु कर्तृत्वे तैक्ष्ण्यादि करणं विदुः ।
तैक्ष्ण्यादीनां स्वतन्त्रत्वे द्वेधात्मा व्यवतिष्ठते ।। ३,७.९६ ।।
आत्मभेदेऽपि सत्येवं एकोऽर्थः स तथा स्थितः ।
तदाश्रयत्वाद्भेदेऽपि कर्तृत्वं बाधकं ततः ।। ३,७.९७ ।।
यथा च संनिधानेन करणत्वं प्रतीयते ।
तथैवासंनिधानेऽपि क्रियासिद्धेः प्रतीयते ।। ३,७.९८ ।।
स्तोकस्य वाभिनिर्वृत्तेरनिर्वृत्तेश्च तस्य वा ।

प्रसिद्धिं करणत्वस्य स्तोकादीनां प्रचक्षते।। ३,७.९९।।
धर्माणां तद्वता भेदादभेदाच्च विशिष्यते।
क्रियावधेरवच्छेद- विशेषाद्भिद्यते यथा।। ३,७.१००।।
[इति करणाधिकारः]

[अथ कर्त्रधिकारः]
प्रागन्यतः शक्तिलाभान्न्यग्भावापादनादपि।
तदधीनप्रवृत्तित्वात्प्रवृत्तानां निवर्तनात्।। ३,७.१०१।।
अदृष्टत्वात्प्रतिनिधेः प्रविवेके च दर्शनात्।
आरादप्युपकारित्वे स्वातन्त्र्यं कर्तुरुच्यते।। ३,७.१०२।।
धर्मैरभ्युदितैः शब्दे नियमो न तु वस्तुनि।
कर्तृधर्मविवक्षायां शब्दात्कर्ता प्रतीयते।। ३,७.१०३।।
एकस्य बुद्ध्यवस्थाभिर्भेदे च परिकल्पिते।
कर्तृत्वं करणत्वं च कर्मत्वं चोपजायते।। ३,७.१०४।।
उत्पत्तेः प्रागसद्भावो बुद्ध्यवस्थानिबन्धनः।
अविशिष्टः सतान्येन कर्ता भवति जन्मनः।। ३,७.१०@।।
कारणं कार्यभावेन यदा वाव्यवतिष्ठते।
कार्यशब्दं तदा लब्ध्वा कार्यत्वेनोपजायते।। ३,७.१०६।।
यथाहेः कुण्डलीभावो व्यग्राणां वा समग्रता।
तथैव जन्मरूपत्वं सतां एके प्रचक्षते।। ३,७.१०७।।
विभक्तयोनि यत्कार्यं कारणेभ्यः प्रवर्तते।
स्वा जातिर्व्यक्तिरूपेण तस्यापि व्यवतिष्ठते।। ३,७.१०८।।
भावेष्वेव पदन्यासः प्रज्ञाया वाच एव वा।
नास्तीत्यप्यपदे नास्ति न च सद्भिद्यते ततः।। ३,७.१०९।।
बुद्धिशब्दौ प्रवर्तेते यथाभूतेषु वस्तुषु।
तेषां अन्येन तत्त्वेन व्यवहारो न विद्यते।। ३,७.११०।।
आकाशस्य यथा भेदश्छायायाश्चलनं यथा।
जन्मनाशावभेदेऽपि तथा कैश्चित्प्रकल्पितौ।। ३,७.१११।।
यथैवाकाशनास्तित्वं असन्मूर्तिनिरूपितम्।
तथैव मूर्तिनास्तित्वं असदाकाशनिश्रयम्।। ३,७.११२।।
यथा तदर्थैर्व्यापारैः क्रियात्मा व्यपदिश्यते।
अभेदग्रहणादेष कार्यकारणयोः क्रमः।। ३,७.११३।।
विकारो जन्मनः कर्ता प्रकृतिर्वेति संशये।
भिद्यते प्रतिपत्तृणां दर्शनं लि"न्गदर्शनैः।। ३,७.११४।।
क्लिप संपद्यमाने या चतुर्थी सा विकारतः।
सुवर्णपिण्डे प्रकृतौ वचनं कुण्डलाश्रयम्।। ३,७.११५।।
वाक्ये संपद्यतेः कर्ता स"न्घश्च्व्यन्तस्य कथ्यते।
वृत्तौ सङ्घीभवन्तीति ब्राह्मणानां स्वतन्त्रता।। ३,७.११६।।
अत्वं संपद्यते यस्त्वं न तस्मिन्युष्मदाश्रया।
प्रवृत्तिः पुरुषस्यास्ति प्राकृतः स विधीयते।। ३,७.११७।।
पूर्वावस्थां अविजहत्संस्पृशन्धर्मं उत्तरम्।
संमूर्छित इवार्थात्मा जायमानोऽभिधीयते।। ३,७.११८।।
सव्यापारतरः कश्चित्क्व चिद्धर्मः प्रतीयते।
संसृज्यन्ते च भावानां भेदवत्योऽपि शक्तयः।। ३,७.११९।।
विपरीतार्थवृत्तित्वं पुरुषस्य विपर्यये।
गम्येत साधनं ह्यत्र सव्यापारं प्रतीयते।। ३,७.१२०।।
त्वं अन्यो भवसीत्येषा तत्र स्यात्परिकल्पना।
राज्ञि भृत्यत्वमापन्ने यथा तद्वद्गतिर्भवेत्।। ३,७.१२१।।
संभावनात्क्रियासिद्धौ कर्तृत्वेन समाश्रितः।

क्रियायां आत्मसाध्यायां साधनानां प्रयोजकः ।। ३,७.१२२ ।।
प्रयोगमात्रे न्यग्भावं स्वातन्त्र्यादेव निश्रितः ।
अविशिष्टो भवत्यन्यैः स्वतन्त्रैर्मुक्तसंशयैः ।। ३,७.१२३ ।।
निमित्तेभ्यः प्रवर्तन्ते सर्व एव स्वभूतये ।
अभिप्रायानुरोधोऽपि स्वार्थस्यैव प्रसिद्धये ।। ३,७.१२४ ।।
[इति कर्त्रधिकारः][अथ हेत्वधिकारः]
प्रेषणाध्येषणे कुर्वंस्तत्समर्थानि चाचरन् ।
कर्तैव विहितां शास्त्रे हेतुसंज्ञां प्रपद्यते ।। ३,७.१२५ ।।
द्रव्यमात्रस्य तु प्रैषे पृच्छयादेर्लोड्विधीयते ।
सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः ।। ३,७.१२६ ।।
गुणक्रियायां स्वातन्त्र्यात्प्रेषणे कर्मतां गतः ।
नियमात्कर्मसंज्ञायाः स्वधर्मेणाभिधीयते ।। ३,७.१२७ ।।
क्रियायाः प्रेरकं कर्म हेतुः कर्तुः प्रयोजकः ।
कर्मार्था च क्रियोत्पत्ति- संस्कारप्रतिपत्तिभिः ।। ३,७.१२८ ।।
[इति हेत्वधिकारः]
[अथ संप्रदानाधिकारः]
अनिराकरणात्कर्तुस्त्यागा"न्गं कर्मणेप्सितम् ।
प्रेरणानुमतिभ्यां च लभते संप्रदानताम् ।। ३,७.१२९ ।।
हेतुत्वे कर्मसंज्ञायां शेषत्वे वापि कारकम् ।
रुच्यर्थादिषु शास्त्रेण संप्रदानाख्यं उच्यते ।। ३,७.१३० ।।
भेदस्य च विवक्षायां पूर्वां पूर्वां क्रियां प्रति ।
परस्या"न्गस्य कर्मत्वान्न क्रियाग्रहणं कृतम् ।। ३,७.१३१ ।।
क्रियाणां समुदाये तु यदैकत्वं विवक्षितम् ।
तदा कर्म क्रियायोगात्स्वाख्ययैवोपचर्यते ।। ३,७.१३२ ।।
भेदाभेदविवक्षा च स्वभावेन व्यवस्थिता ।
तस्माद्गत्यर्थकर्मत्वे व्यभिचारो न दृश्यते ।। ३,७.१३३ ।।
विकल्पेनैव सर्वत्र संज्ञे स्यातां उभे यदि ।
आरम्भेण न योगस्य प्रत्याख्यानं समं भवेत् ।। ३,७.१३४ ।।
त्यागरूपं प्रहातव्ये प्राप्ये संसर्गदर्शनम् ।
आस्थितं कर्म यत्तत्र द्वैरूप्यं भजते क्रिया ।। ३,७.१३५ ।।
[इति संप्रदानाधिकारः]

[अथापादानाधिकारः]
निर्दिष्टविषयं किं चिदुपात्तविषयं तथा ।
अपेक्षितक्रियं चेति त्रिधापादानं उच्यते ।। ३,७.१३६ ।।
संयोगभेदाद्भिन्नात्मा गमिरेव भ्रमिर्यथा ।
ध्रुवावधिरपायोऽपि समवेतस्तथाध्रुवे ।। ३,७.१३७ ।।
द्रव्यस्वभावो न ध्रौव्यं इति सूत्रे प्रतीयते ।
अपायविषयं ध्रौव्यं यत्तु तावद्विवक्षितम् ।। ३,७.१३८ ।।
सरणे देवदत्तस्य ध्रौव्यं पाते तु वाजिनः ।
आविष्टं यदपायेन तस्याध्रौव्यं प्रचक्षते ।। ३,७.१३९ ।।
उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्मजे ।
विभागे प्रविभक्ते तु क्रिये तत्र विवक्षिते ।। ३,७.१४० ।।
मेषान्तरक्रियापेक्षं अवधित्वं पृथक्पृथक् ।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक्पृथक् ।। ३,७.१४१ ।।
अभेदेन क्रियैका तु द्विसाध्या चेद्विवक्षिता ।
मेषावपाये कर्तारौ यद्यन्यो विद्यतेऽवधिः ।। ३,७.१४२ ।।
गतिर्विना त्ववधिना नापाय इति गम्यते ।
वृक्षस्य पर्णं पततीत्येवं भाष्ये निदर्शितम् ।। ३,७.१४३ ।।

भेदाभेदौ पृथग्भावः स्थितिश्चेति विरोधिनः ।
युगपन्न विवक्ष्यन्ते सर्वे धर्मा बलाहके ।। ३,७.१४४ ।।
धनुषा विध्यतीत्यत्र विनापायविवक्षया ।
करणत्वं यतो नास्ति तस्मात्तदुभयं सह ।। ३,७.१४५ ।।
एकैव वा सती शक्तिर्द्विरूपा व्यवतिष्ठते ।
निमित्तं संज्ञयोस्तत्र परया बाध्यतेऽपरा ।। ३,७.१४६ ।।
निर्धारणे विभक्ते यो भीत्रादीनां च यो विधिः ।
उपात्तापेक्षितापायः सोऽबुधप्रतिपत्तये ।। ३,७.१४७ ।।
[इत्यपादानाधिकारः]
[अथाधिकरणाधिकारः]
कर्तृकर्मव्यवहितां असाक्षाद्धारयत्क्रियाम् ।
उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ।। ३,७.१४८ ।।
उपश्लेषस्य चाभेदस्तिलाकाशकटादिषु ।
उपकारास्तु भिद्यन्ते संयोगिसमवायिनाम् ।। ३,७.१४९ ।।
अविनाशो गुरुत्वस्य प्रतिबन्धे स्वतन्त्रता ।
दिग्विशेषादवच्छेद इत्याद्या भेदहेतवः ।। ३,७.१५० ।।
आकाशं एव केषां चिद्देशभेदप्रकल्पनात् ।
आधारशक्तिः प्रथमा सर्वसंयोगिनां मता ।। ३,७.१५१ ।।
इदं अत्रेति भावानां अभावान्न प्रकल्पते ।
व्यपदेशस्तं आकाश- निमित्तं संप्रचक्षते ।। ३,७.१५२ ।।
कालात्क्रिया विभज्यन्त आकाशात्सर्वमूर्तयः ।
एतावांश्चैव भेदोऽयं अभेदोपनिबन्धनः ।। ३,७.१५३ ।।
यद्यप्युपवसिर्देश- विशेषं अनुरुध्यते ।
शब्दप्रवृत्तिधर्मात्तु कालं एवावलम्बते ।। ३,७.१५४ ।।
वसतावप्रयुक्तेऽपि देशोऽधिकरणं ततः ।
अप्रयुक्तं त्रिरात्रादि कर्म चोपवसौ स्मृतम् ।। ३,७.१५५ ।।
[इत्यधिकरणाधिकारः]
[अथ शेषाधिकारः]
संबन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः ।
श्रुतायां अश्रुतायां वा क्रियायां सोऽभिधीयते ।। ३,७.१५६ ।।
द्विष्ठोऽप्यसौ परार्थत्वाद्गुणेषु व्यतिरिच्यते ।
तत्राभिधीयमानः सन्प्रधानेऽप्युपयुज्यते ।। ३,७.१५७ ।।
निमित्तनियमः शब्दात्संबन्धस्य न गृह्यते ।
कर्मप्रवचनीयैस्तु स विशेषोऽवरुध्यते ।। ३,७.१५८ ।।
साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः ।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये ।। ३,७.१५९ ।।
निष्ठायां कर्मविषया षष्थी च प्रतिषिध्यते ।
शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते ।। ३,७.१६० ।।
अन्येन व्यपदिष्टस्य यस्यान्यत्रोपजायते ।
व्यतिरेकः स धर्मौ द्वौ लभते विषयान्तरे ।। ३,७.१६१ ।।
प्राधान्यं स्वगुणे लब्ध्वा प्रधाने याति शेषताम् ।
सहयोगे स्वयोगेऽतः प्रधानत्वं न हीयते ।। ३,७.१६२ ।।
[इति शेषाधिकारः]
सिद्धस्याभिमुखीभाव- मात्रं संबोधनं विदुः ।
प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते ।। ३,७.१६३ ।।
संबोधनं न वाक्यार्थ इति पूर्वेभ्य आगमः ।
उद्देशेन विभक्त्यर्था वाक्यार्थात्समपोद्धृताः ।। ३,७.१६४ ।।
विभक्त्यर्थेऽव्ययीभाव- वचनादवसीयताम् ।
अन्यो द्रव्याद्विभक्त्यर्थः सोऽव्ययेनाभिधीयते ।। ३,७.१६५ ।।

द्रव्यं तु यद्यथाभूतं तदत्यन्तं तथा भवेत् ।
क्रियायोगेऽपि तस्यासौ द्रव्यात्मा नापहीयते । । ३,७.१६६ । ।
तस्माद्यत्करणं द्रव्यं तत्कर्म न पुनर्भवेत् ।
सर्वस्य वान्यथाभावस्तस्य द्रव्यात्मनो भवेत् । । ३,७.१६७ । ।

# ३,८: क्रियासमुद्देशः

यावत्सिद्धं असिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात्तत्क्रियेति प्रतियते । । ३,८.१ । ।
कार्यकारणभावेन ध्वनतीत्याश्रितक्रमः ।
ध्वनिः क्रमनिवृत्तौ तु ध्वनिरित्येव कथ्यते । । ३,८.२ । ।
श्वेते श्वेतत इत्येतच्छ्वेतत्वेन प्रकाशते ।
आश्रितक्रमरूपत्वादभिधानं प्रवर्तते । । ३,८.३ । ।
गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते । । ३,८.४ । ।
समूहः स तत्बाभूतः प्रतिभेदं समूहिसु ।
समाप्यते ततो भेदे कालभेदस्य संभवः । । ३,८.५ । ।
क्रमात्सदसतां तेषां आत्मानो न समूहिनाम् ।
सद्वस्तुविषयैर्यान्ति संबन्धं चक्षुरादिभिः । । ३,८.६ । ।
यथा गौरिति सम्घातः सर्वो नेन्द्रियगोचरः ।
भागशस्तूपलब्धस्य बुद्धौ रूपं निरूप्यते । । ३,८.७ । ।
इन्द्रियैरन्यथाप्राप्तौ भेदाम्शोपनिपातिभिः ।
अलातचक्रवद्रूपं क्रियाणां परिकल्प्यते । । ३,८.८ । ।
यथा च भागाः पचतेरुदकासेचनादयः ।
उदकासेचनादिनां ज्ञेया भागास्तथापरे । । ३,८.९ । ।
यश्चापकर्षपर्यन्तं अनुप्राप्तः प्रतीयते ।
तत्रैकस्मिन्क्रियाशब्दः केवले न प्रयुज्यते । । ३,८.१० । ।
पूर्वोत्तरैस्तथा भागैः समवस्थापितक्रमः ।
एकः सोऽप्यसदध्यासादाख्यातैरभिधीयते । । ३,८.११ । ।
कालानुपाति यद्रूपं तदस्तीत्यनुगम्यते ।
परितस्तु परिच्छिन्नं भाव इत्येव कथ्यते । । ३,८.१२ । ।
व्यवहारस्य सिद्धत्वान्न चेयं गुणकल्पना ।
उपचारो हि मुख्यस्य संभवादवतिष्ठते । । ३,८.१३ । ।
आहितोत्तरशक्तित्वात्प्रत्येकं वा समूहिनः ।
अनेकरूपा लक्ष्यन्ते क्रमवन्त इवाक्रमाः । । ३,८.१४ । ।
अनन्तरं फलं यस्याः कल्पते तां क्रियां विदुः ।
प्रधानभूतां तादर्थ्यादन्यासां तु तदाख्यता । । ३,८.१५ । ।

- क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद्विचेष्टितम् ।

अनपेक्ष्य प्रयुन्जीत गच्छतीत्यवधारयन् । । ३,८.१६ * । ।
सत्सु प्रत्ययरूपोऽसौ भावो यावन्न जायते ।
तावत्परेषां रूपेण साध्यः सन्नभिधीयते । । ३,८.१७ । ।
सिद्धे तु साधनाकाङ्क्षा कृतार्थत्वान्निवर्तते ।
न क्रियावाचिनां तस्मात्प्रयोगस्तत्र विद्यते । । ३,८.१८ । ।
स चापूर्वापरिभूत एकत्वादक्रमात्मकः ।
पूर्वापराणां धर्मेण तदर्थेनानुगम्यते । । ३,८.१९ । ।
असन्निवर्तते तस्माद्यत्सत्तदुपलभ्यते ।
तयोः सदसतोश्चासावात्मैक इव गृह्यते । । ३,८.२० । ।
जातिं अन्ये क्रियां आहुरनेकव्यक्तिवर्तिनीम् ।
असाध्या व्यक्तिरूपेण सा साध्येवोपलभ्यते । । ३,८.२१ । ।

अन्ते या वा क्रियाभागे जातिः सैव क्रिया स्मृता ।
सा व्यक्तेरनुनिष्पादे जायमानेव गम्यते ।। ३,८.२२ ।।
स्वव्यापारविशिष्टानां सत्ता वा, कर्तृकर्मनाम् ।
क्रिया व्यापारभेदेषु सत्ता वा समवायिनी ।। ३,८.२३ ।।
अन्त्ये वात्मनि या सत्ता सा क्रिया कैश्चिदिष्यते ।
भाव एव हि धात्वर्थ इत्यविच्छिन्न आगमः ।। ३,८.२४ ।।
बुद्धिं तज्जातिं अन्ये तु बुद्धिसत्तां अथापरे ।
प्रत्यस्तरूपां भावेषु क्रियेति प्रतिजानते ।। ३,८.२५ ।।
आविर्भावतिरोभावौ जन्मनाशौ तथापरैः ।
षट्सु भावविकारेषु कल्पितौ व्यावहारिकौ ।। ३,८.२६ ।।
ताभ्यां सर्वप्रवृत्तीनां अभेदेनोपसम्ग्रहः ।
जन्मैवाश्रितसारूप्यं स्थितिरित्यभिधीयते ।। ३,८.२७ ।।

- जायमानान्न जन्नान्यद्विनाशेऽप्यपदार्थता ।

अतो भावविकारेषु सत्तैका व्यवतिष्ठते ।। ३,८.२८ * ।।

- पूर्वभागस्तु यज्जातात्तज्जन्मेत्यपदिश्यते ।

आश्रितक्रमरूपेण निमित्तत्वे विवक्षिते ।। ३,८.२९ ।।
आख्यातशब्दैरर्थोऽसावेवंभूतोऽभिधीयते ।
नामशब्दाः प्रवर्तन्ते संहरन्त इव क्रमम् ।। ३,८.३० ।।
फलं फलापदेशो वा वस्तु वा तद्विरोधि यत् ।
तदन्यदेव पूर्वेषां नाग इत्यपदिश्यते ।। ३,८.३१ ।।
नैवास्ति नैव नास्तीति वस्तुनो ग्रहनाद्विना ।
कल्पते पररूपेण वस्त्वन्यदनुगम्यते ।। ३,८.३२ ।।
भावाभावौ घटादिनां अस्पृशन्नपि पाणिना ।
कश्चिद्वेदाप्रकाशेऽपि प्रकाशे तत एव वा ।। ३,८.३३ ।।
व्यापि सौक्ष्म्यं क्व चिद्याति क्व चित्संहन्यते पुनः ।
अकुर्वाणोऽथ वा किं चित्स्वशक्त्यैवं प्रकाशते ।। ३,८.३४ ।।
सर्वरूपस्य तत्त्वस्य यत्क्रमेणेव दर्शनम् ।
भागैरिव प्रक्लिप्तश्च तां क्रियां अपरे विदुः ।। ३,८.३५ ।।
सत्ता स्वशक्तियोगेन सर्वरूपा व्यवस्थिता ।
साध्या च साधनं चैव फलं भोक्ता फलस्य च ।। ३,८.३६ ।।
क्रियां अन्ये तु मन्यन्ते क्व चिदप्यनपाश्रिताम् ।
साधनैकार्थकारित्वे प्रवृत्तिं अनपायिनीम् ।। ३,८.३७ ।।
सामान्यभूता सा पूर्वं भागशः प्रविभज्यते ।
ततो व्यापाररूपेण साध्येव व्यवतिष्ठते ।। ३,८.३८ ।।
प्रकृतिः साधनानां सा प्रथमं तच्च कारकम् ।
व्यापाराणां ततोऽन्यत्वं अपरैरुपवर्ण्यते ।। ३,८.३९ ।।
बहूनां संभवेऽर्थानां के चिदेवोपकारिनः ।
संसर्गे कश्चिदेसां तु प्राधान्येन प्रतीयते ।। ३,८.४० ।।
साध्यत्वात्तत्र चाख्यातैर्व्यापाराः सिद्धसाधनाः ।
प्राधान्येनाभिधीयन्ते फलेनापि प्रवर्तिताः ।। ३,८.४१ ।।
एकत्वावृत्तिभावाभ्यां भेदाभेदसमन्वये ।
संख्यास्तत्रोपलभ्यन्ते संख्येयावयवक्रियाः ।। ३,८.४२ ।।
सिद्धस्यार्थस्य पाकादेः कथं साधनयोगिता ।
साध्यत्वे वा तिङन्तेन कृतां भेदो न कश्चन ।। ३,८.४३ ।।
तत्र कारकयोगाया यद्याख्यातं निबन्धनम् ।
षष्ठ्वाः सा लेन संबन्धे व्युदस्ता कर्तृकर्मनोः ।। ३,८.४४ ।।
एकाभिधान एकोऽर्थो युगपच्च द्विधर्मभाक् ।
न संभवति सिद्धत्वे स साध्यः स्यात्कथं पुनः ।। ३,८.४५ ।।

एतावत्साधनं साध्यं एतावदिति कल्पना ।
शास्त्र एव न वाक्येऽस्ति विभागः परमार्थतः । । ३,८.४६ । ।
आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता ।
प्रकल्पिता यथा शास्त्रे स घञादिस्वपि क्रमः । । ३,८.४७ । ।
साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।
सत्त्वभावस्तु यस्तस्याः स घञादिनिबन्धनः । । ३,८.४८ । ।
बन्धुताभेदरूपेण बन्धुशब्दे व्यवस्थिता ।
समूहो बन्ध्ववस्था तु प्रत्ययेनाभिधीयते । । ३,८.४९ । ।
तत्र यं प्रति साध्यत्वं असिद्धा तं प्रति क्रिया ।
सिद्धा तु यस्मिन्साध्यत्वं न तं एव पुनः प्रति । । ३,८.५० । ।
राज्ञः पुत्रस्य नप्तेति न राज्ञि व्यतिरिच्यते ।
पुत्रस्यार्थः प्रधानत्वं न चास्य विनिवर्तते । । ३,८.५१ । ।
मृगो धावति पश्येति साध्यसाधनरूपता ।
तथा विषयभेदेन सरणस्योपपद्यते । । ३,८.५२ । ।
लकृत्यक्तखलर्थानां तथाव्ययकृतां अपि ।
रूढिनिष्ठाघञादिनां धातुः साध्यस्य वाचकः । । ३,८.५३ । ।
साध्यस्यापरिनिष्पत्तेः सोऽयं इत्यनुपग्रहः ।
तिङन्तैरन्तरेणेवं उपमानं ततो न तैः । । ३,८.५४ । ।
साधनत्वं प्रसिद्धं च तिङ्क्षु संबन्धिनां यतः ।
तेनाध्यारोप एव स्यादुपमा तु न विद्यते । । ३,८.५५ । ।
न्यूनेषु च समाप्तार्थं उपमानं विधीयते ।
क्रिया चैवाश्रये सर्वा तत्र तत्र समाप्यते । । ३,८.५६ । ।
येनैव हेतुना हंसः पततीत्यभिधीयते ।
आतौ तस्य समाप्तत्वादुपमार्थो न विद्यते । । ३,८.५७ । ।
क्रियाणां जातिभिन्नानां सादृश्यं नावधार्यते ।
सिद्धेश्च प्रक्रमे साध्यं उपमातुं न शक्यते । । ३,८.५८ । ।
वनं वृक्षा इति यथा भेदाभेदव्यपाश्रयात् ।
अर्थात्मा भिद्यते भावे स बाह्याभ्यन्तरे क्रमः । । ३,८.५९ । ।
सामान्ये भाव इत्यत्र यल्लिङ्गं उपलभ्यते ।
भेदानां अनुमेयत्वान्न तत्तेषु विवक्ष्यते । । ३,८.६० । ।
निर्देशे चरितार्थत्वाल्लिङ्गं भावेऽविवक्सितम् ।
उपमानविधित्वाच्च भावादन्यत्पचादिसु । । ३,८.६१ । ।
भवतौ यत्पचादिनां तावदत्रोपदिश्यते ।
न च लिङ्गं पचादिनां भवतौ समवस्थितम् । । ३,८.६२ । ।
एकश्च सोऽर्थः सत्ताख्यः कथं चित्कैश्चिदुच्यते ।
लिङ्गानि चास्य भिद्यन्ते पचिरूपादिभेदवत् । । ३,८.६३ । ।
आचार्यो मातुलश्चेति यथैको व्यपदिश्यते ।
सम्बन्धिभेदादर्थात्मा स विधिः पक्तिभावयोः । । ३,८.६४ । ।

## ३,९ः कालसमुद्देशः

व्यापारव्यतिरेकेण कालं एके प्रचक्षते ।
नित्यं एकं विभु द्रव्यं परिमाणं क्रियावताम् । । ३,९.१ । ।
दिष्टिप्रस्थसुवर्णादि मूर्तिभेदाय कल्पते ।
क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका । । ३,९.२ । ।
उत्पत्तौ च स्थितौ चैव विनाशे चापि तद्वताम् ।
निमित्तं कालं एवाहुर्विभक्तेनात्मना स्थितम् । । ३,९.३ । ।
तं अस्य लोकयन्त्रस्य सूत्रधारं प्रचक्षते ।
प्रतिबन्धाभ्यनुज्ञाभ्यां तेन विश्वं विभज्यते । । ३,९.४ । ।

यदि न प्रतिबध्नीयात्प्रतिबन्धं च नोत्सृजेत् ।
अवस्था व्यतिकीर्येरन्पौर्वापर्यविनाकृताः । । ३,९.५ । ।
तस्यात्मा बहुधा भिन्नो भेदैर्धर्मान्तराश्रयैः ।
न हि भिन्नं अभिन्नं वा वस्तु किं चन विद्यते । । ३,९.६ । ।
नैको न चाप्यनेकोऽस्ति न शुक्लो नापि चासितः ।
द्रव्यात्मा स तु संसर्गादेवंरूपः प्रकाशते । । ३,९.७ । ।
संसर्गिनां तु ये भेदा विशेषास्तस्य ते मताः ।
स भिन्नस्तैर्व्यवस्थानां कालो भेदाय कल्पते । । ३,९.८ । ।
विशिष्टकालसंबन्धाद्वृत्तिलाभः प्रकल्पते ।
शक्तीनां संप्रयोगस्य हेतुत्वेनावतिष्ठते । । ३,९.९ । ।
जन्माभिव्यक्तिनियमाः प्रयोगोपनिबन्धनाः ।
नित्याधीनस्थितित्वाच्च स्थितिर्नियमपूर्विका । । ३,९.१० । ।
स्थितस्यानुग्रहस्तैस्तैर्धर्मैः संसर्गिभिस्ततः ।
प्रतिबन्धस्तिरोभावः प्रहाणं इति चात्मनः । । ३,९.११ । ।
प्रत्यवस्थं तु कालस्य व्यापारोऽत्र व्यवस्थितः ।
काल एव हि विश्वात्मा व्यापार इति कथ्यते । । ३,९.१२ । ।
मूर्तीनां तेन भिन्नानां आचयापचयाः पृथक् ।
लक्ष्यन्ते परिणामेन सर्वासां भेदयोगिना । । ३,९.१३ । ।
जलयन्त्रभ्रमावेश- सदृशीभिः प्रवृत्तिभिः ।
स कलाः कलयन्सर्वाः कालाख्यां लभते विभुः । । ३,९.१४ । ।
प्रतिभद्धाश्च यास्तेन चित्रा विश्वस्य वृत्तयः ।
ताः स एवानुजानाति यथा तन्तुः शकुन्तिकाः । । ३,९.१५ । ।
विशिष्टकालसंबन्धाल्लब्धपाकासु शक्तिषु ।
क्रियाभिव्यज्यते नित्या प्रयोगाख्येन कर्मणा । । ३,९.१६ । ।
जातिप्रयुक्ता तस्यां तु फलव्यक्तिः प्रजायते ।
कुतोऽप्यद्भुतया वृत्त्या शक्तिभिः सा नियम्यते । । ३,९.१७ । ।
ततस्तु समवायाख्या शक्तिर्भेदस्य बाधिका ।
एकत्वं इव ता व्यक्तीरापादयति कारणैः । । ३,९.१८ । ।
अथास्मान्नियमादूर्ध्वं जातयो याः प्रयोजिकाः ।
ताः सर्वा व्यक्तिं आयान्ति स्वच्छे छाया इवाम्भसि । । ३,९.१९ । ।
कारणानुविधायित्वादथ कारण पूर्वकाः ।
गुणास्तत्रोपजायन्ते स्वजातिव्यक्तिहेतवः । । ३,९.२० । ।
आश्रयाणां च नित्यत्वं आश्रितानां च नित्यता ।
ता व्यक्तीरनुगृहणाति स्थितिस्तेन प्रकल्पते । । ३,९.२१ । ।
अनित्यस्य यथोत्पादे पारतन्त्र्यं तथा स्थितौ ।
विनाशायैव तत्शृष्टं अस्वाधीनस्थितिं विदुः । । ३,९.२२ । ।
स्थितः संसर्गिभिर्भावैः स्वक्रियास्वनुगृहयते ।
नैषां सत्तां अनुद्गृह्य वृत्तिर्जन्मवतां स्मृता । । ३,९.२३ । ।
जराख्या कालशक्तिर्या शक्त्यन्तरविरोधिनी ।
सा शक्तीः प्रतिबध्नाति जायन्ते च विरोधिनः । । ३,९.२४ । ।
प्रयोजकास्तु ये भावाः स्थितिभागस्य हेतवः ।
तिरोभवन्ति ते सर्वे यत आत्मा प्रहीयते । । ३,९.२५ । ।
यथैवाद्बुतया वृत्त्या निष्क्रमं निर्निबन्धनम् ।
अपदं जायते सर्वं तथास्यात्मा प्रहीयते । । ३,९.२६ । ।
क्रिययोरपवर्गिण्योर्नानार्थसमवेतयोः ।
संबन्धिना विनैकेन परिच्छेदः कथं भवेत् । । ३,९.२७ । ।
यथा तुलायां हस्ते वा नानाद्रव्यव्यवस्थितम् ।
गुरुत्वं परिमीयेत कालादेवं क्रियागतिः । । ३,९.२८ । ।
जहाति सहवृत्ताश्च क्रियाः स समवस्थिताः ।

व्रीहिर्यथोदकं तेन हायनाख्यां प्रपद्यते । । ३,९.२९ । ।
प्रतिबन्धाभ्यनुज्ञाभ्यां वृत्तिर्या तस्य शास्वती ।
तया विभज्यमानोऽसौ भजते क्रमरूपताम् । । ३,९.३० । ।
कर्तृभेदात्तदर्थेषु प्रचयापचयौ गतः ।
समत्वं विषमत्वं वा स एकः प्रतिपद्यते । । ३,९.३१ । ।
क्रियाभेदाद्यथैकस्मिंस्तक्षाद्याख्या प्रवर्तते ।
क्रियाभेदात्तथैकस्मिन्नृत्वाद्याख्योपजायते । । ३,९.३२ । ।
आरम्भश्च क्रिया चैव निष्ठा चेत्यभिधीयते ।
धर्मान्तराणां अध्यास- भेदात्सदसदात्मनः । । ३,९.३३ । ।
यावांश्च द्व्यणुकादीनां तावान्हिमवतोऽप्यसौ ।
न ह्यात्मा कस्य चिद्भेत्तुं प्रचेतुं वापि शक्यते । । ३,९.३४ । ।
अन्यैस्तु भावैरन्येषां प्रचयः परिकल्प्यते ।
शनैरिदं इदं क्षिप्रं इति तेन प्रतीयते । । ३,९.३५ । ।
असतश्च क्रमो नास्ति स हि भेत्तुं न शक्यते ।
सतोऽपि चात्मतत्त्वं यत्तत्तथैवावतिष्ठते । । ३,९.३६ । ।
क्रियोपाधिश्च सन्भूत- भविष्यद्वर्तमानताः ।
एकादशाभिराकारैर्विभक्ताः प्रतिपद्यते । । ३,९.३७ । ।
भूतः पञ्चविधस्तत्र भविष्यंश्च चतुर्विधः ।
वर्तमानो द्विधाख्यात इत्येकादश कल्पनाः । । ३,९.३८ । ।
काले निधाय स्वं रूपं प्रज्ञया यन्निगृह्यते ।
भावास्ततो निवर्तन्ते तत्र संक्रान्तशक्तयः । । ३,९.३९ । ।
भाविनां चैव यद्रूपं तस्य च प्रतिबिम्बकम् ।
सुनिर्मृष्ट इवादर्शे काल एवोपपद्यते । । ३,९.४० । ।
तृणपर्णलतादीनि यथा स्रोतोऽनुकर्षति ।
प्रवर्तयति कालोऽपि मात्रा मात्रावतां तथा । । ३,९.४१ । ।
आविश्येवानुसंधत्ते यथा गतिमतां गतीः ।
वायुस्तत्रैव कालात्मा विधत्ते क्रमरूपताम् । । ३,९.४२ । ।
अयनप्रविभागश्च गतीश्च ज्योतिषां ध्रुवा ।
निवृत्तिप्रभवाश्चैव भूतानां तन्निबन्धनाः । । ३,९.४३ । ।
मात्राणां परिणामा ये कालवृत्त्यनुपातिनः ।
नक्षत्राख्या पृथक्तेषु चिह्नमात्रं तु तारकाः । । ३,९.४४ । ।
रुतैर्मृगशकुन्तानां स्थावराणां च वृत्तिभिः ।
छायादिपरिणामैश्च ऋतुधामा निरूप्यते । । ३,९.४५ । ।
निर्भासोपगमो योऽयं क्रमवानिव दृश्यते ।
अक्रमस्यापि विश्वस्य तत्कालस्य विचेष्टितम् । । ३,९.४६ । ।
दूरान्तिकव्यवस्थानं अध्वाधिकरणं यथा ।
चिरक्षिप्रव्यवस्थानं कालाधिकरणं तथा । । ३,९.४७ । ।
तस्याभिन्नस्य कालस्य व्यवहारे क्रियाकृताः ।
भेदा इव त्रयः सिद्धा यांल्लोको नातिवर्तते । । ३,९.४८ । ।
एकस्य शक्तयस्तिस्रः कालस्य समवस्थिताः ।
यत्संबन्धेन भावानां दर्शनादर्शने सताम् । । ३,९.४९ । ।
द्वाभ्यां स किल शक्तिभ्यां भावानां वरणात्मकः ।
शक्तिस्तु वर्तमानाख्या भावरूपप्रकाशिनी । । ३,९.५० । ।
अनागता जन्मशक्तेः शक्तिरप्रतिबन्धिका ।
अतीताख्या तु या शक्तिस्तया जन्म विरुध्यते । । ३,९.५१ । ।
तमःप्रकाशवत्त्वेते त्रयोऽध्वानो व्यवस्थिताः ।
अक्रमास्तेषु भावानां क्रमः समुपलभ्यते । । ३,९.५२ । ।
द्वौ तु तत्र तमोरूपावेकस्यालोकवत्स्थितिः ।
अतीतं अपि केषां चित्पुनर्विपरिवर्तते । । ३,९.५३ । ।

युगपद्वर्तमानत्वं तद्धर्मा प्रतिपद्यते ।
केषां चिद्वर्तमानत्वाच्चैति तद्वदतीतताम् ।। ३,९.५४ ।।
हेतुपकारादाक्षिप्तो वर्तमानत्वं आगतः ।
शान्तहेतूपकारः सन्पुनर्नोपैति दर्शनम् ।। ३,९.५५ ।।
द्वे एव कालस्य विभोः केषां चिच्छक्तिवर्त्मनी ।
करोति याभ्यां भावानां उन्मीलननिमीलने ।। ३,९.५६ ।।
कलाभिः पृथगर्थाभिः प्रविभक्तं स्वभावतः ।
के चिद्बुद्ध्यनुसंहार- लक्षणं तं प्रचक्षते ।। ३,९.५७ ।।
ज्ञानानुगतशक्तिं वा बाह्यं वा सत्यतः स्थितम् ।
कालात्मानं अनाश्रित्य व्यवहर्तुं न शक्यते ।। ३,९.५८ ।।
तिस्रो भावस्य भावस्य केषां चिद्भावशक्तयः ।
ताभिः स्वशक्तिभिः सर्वं सदैवास्ति च नास्ति च ।। ३,९.५९ ।।
सत्त्वादव्यतिरेकेण तास्तिस्रोऽपि व्यवस्थिताः ।
क्रमस्तास्तदभेदाच्च सदसत्त्वं न भिद्यते ।। ३,९.६० ।।
दर्शनादर्शनेनैकं दृष्टादृष्टं तदेव तु ।
अध्वनां एकता नास्ति न च किं चिन्निवर्तते ।। ३,९.६१ ।।
शक्त्यात्मदेवतापक्षैर्भिन्नं कालस्य दर्शनम् ।
प्रथमं तदविद्यायां यद्विद्यायां न विद्यते ।। ३,९.६२ ।।
अभेदे यदि कालस्य ह्रस्वदीर्घप्लुतादिषु ।
दृश्यते भेदनिर्भासः स चिरक्षिप्रबुद्धिवत् ।। ३,९.६३ ।।
ह्रस्वदीर्घप्लुतावृत्त्या नालिकासलिलादिषु ।
कथं प्रचययोगः स्यात्कल्पनामात्रहेतुकः ।। ३,९.६४ ।।
अभिव्यक्तिनिमित्तस्य प्रचयेन प्रचीयते ।
अभिन्नं अपि शब्दस्य तत्त्वं अप्रचयात्मकम् ।। ३,९.६५ ।।
एवं मात्रातुरीयस्य भेदो दाशतयस्य वा ।
परिमाणविकल्पेन शब्दात्मनि न विद्यते ।। ३,९.६६ ।।
अनुनिष्पादिकल्पेन येऽन्तराल इव स्थिताः ।
शब्दास्ते प्रतिपत्तृणां उपायाः प्रतिपत्तये ।। ३,९.६७ ।।
विशिष्टं अवधिं तं तं उपादाय प्रकल्पते ।
कालः कालवतां एकः क्षणमासर्तुभेदभाक् ।। ३,९.६८ ।।
बुद्ध्यवग्रहभेदाच्च व्यवहारात्मनि स्थितः ।
तावानेव क्षणः कालो युगमन्वन्तराणि वा ।। ३,९.६९ ।।
प्रतिबन्धाभ्यनुज्ञाभ्यां नालिकाविवराश्रिते ।
यदम्भसि प्रक्षरणं तत्कालस्यैव चेष्टितम् ।। ३,९.७० ।।
अल्पे महति वा छिद्रे तत्संबन्धे न भिद्यते ।
कालस्य वृत्तिरात्मापि तं एवास्यानुवर्तते ।। ३,९.७१ ।।
आक्रीड इव कालस्य दृश्यते यः स्वशक्तिभिः ।
बहुरूपस्य भावेषु बहुधा तेन भिद्यते ।। ३,९.७२ ।।
त्वचिसारस्य वा वृद्धिं तृणराजस्य वा दधत् ।
तावत्तद्वृद्धियोगेन कालतत्त्वं विकल्पते ।। ३,९.७३ ।।
व्यतिक्रमेऽपि मात्राणां तस्य नास्ति व्यतिक्रमः ।
न गन्तृगतिभेदेन मार्गभेदोऽस्ति कश्चन ।। ३,९.७४ ।।
उदयास्तमयावृत्त्या ज्योतिषां लोकसिद्धया ।
कालस्याव्यतिपातेऽपि ताद्धर्म्यं इव लक्ष्यते ।। ३,९.७५ ।।
आदित्यग्रहनक्षत्र- परिस्पन्दं अथापरे ।
भिन्नं आवृत्तिभेदेन कालं कालविदो विदुः ।। ३,९.७६ ।।
क्रियान्तरपरिच्छेद- प्रवृत्ता या क्रियां प्रति ।
निर्ज्ञातपरिमाणा सा काल इत्यभिधीयते ।। ३,९.७७ ।।
ज्ञाने रूपस्य संक्रान्तिर्ज्ञानेनैवानुसंहृतिः ।

अतः क्रियान्तराभावे सा क्रिया काल इष्यते । । ३,९.७८ । ।
भूतो घट इतीयं च सत्ताया एव भूतता ।
भूता सत्तेति सत्तायाः सत्ता भूताभिधीयते । । ३,९.७९ । ।
परतो भिद्यते सर्वं आत्मा तु न विकल्प्यते ।
पर्वतादिस्थितिस्तस्मात्पररूपेण भिद्यते । । ३,९.८० । ।
प्रसिद्धभेदा व्यापारा विरूपावयवक्रियाः ।
साहचर्येण भिद्यन्ते सरूपावयवक्रियाः । । ३,९.८१ । ।

- व्यवधानं इवोपैति निवृत्त इव दृश्यते ।

क्रियासमूहो भुज्यादिरन्तरालप्रवृत्तिभिः । । ३,९.८२ * । ।

- न च विच्छिन्नरूपोऽपि सोऽविरामान्निवर्तते ।

सर्वैव हि क्रियान्येन सम्कीर्णेवोपलभ्यते । । ३,९.८३ * । ।

- तदन्तरालदृष्टा वा सर्वैवावयवक्रिया * ।

सादृश्यात्सति भेदे तु तदङ्गत्वेन गृह्यते । । ३,९.८४ । ।
सदसद्वापि वस्तु स्यात्तृतीयं नास्ति किं चन ।
तेन भूतभविष्यन्तौ मुक्त्वा मध्यं न विद्यते । । ३,९.८५ । ।
निर्वृत्तिरूपं एकस्य भेदाभावान्न कल्पते ।
सदसद्वापि तेनैकं क्रमरूपं कथं भवेत् । । ३,९.८६ । ।
बहूनां चानवस्थानादेकं एवोपलभ्यते ।
यथोपलब्धि स्मरणं तत्र चाप्युपपद्यते । । ३,९.८७ । ।
सदसद्रूपं एकं स्याद्सर्वस्यैकत्वकल्पने ।
निर्वृत्तिरूपं निर्वृत्तेः सामान्यं अथ वा भवेत् । । ३,९.८८ । ।
कार्योत्पत्तौ समर्थं वा स्वेन धर्मेण तत्तथा ।
आत्मतत्त्वेन गृह्येत सा चास्मिन्वर्तमानता । । ३,९.८९ । ।
क्रियाप्रबन्धरूपं यदध्यात्मं विनिगृह्यते ।
संक्रान्तरूपं एकत्र तां आहुर्वर्तमानताम् । । ३,९.९० । ।
क्रियातिपत्तिरत्यन्तं क्रियानुत्पत्तिलक्षणा ।
न च भूतं अनुत्पन्नं न भविष्यत्तथाविधम् । । ३,९.९१ । ।
प्राग्विरुद्धक्रियोत्पादान्निर्वृत्ते वा विरोधिनि ।
व्यापारेऽवधिभेदेन विषयस्तत्र भिद्यते । । ३,९.९२ । ।
व्यभिचारे निमित्तस्य साधुत्वं न प्रकल्पते ।
भाव्यासीदिति सूत्रेण तत्कालेऽन्यत्र शिष्यते । । ३,९.९३ । ।
स्वकाल एव साधुत्वे कालभेदे गतिः कथम् ।
वाक्यार्थादतदर्थेषु विशिष्टत्वं न सिध्यति । । ३,९.९४ । ।
तदर्थश्चेदवयवो भाविनो भूततागतिः ।
न स्यादत्यन्तभूतत्वं एवैकं तत्र संभवेत् । । ३,९.९५ । ।
विशिष्टकालता पूर्वं तथापि तु विशेषणे ।
आश्रयात्सोऽन्तरङ्गत्वात्तत्र साधुर्भविष्यति । । ३,९.९६ । ।
आमिश्र एव प्रक्रान्तः स पदार्थस्तथाविधः ।
केवलस्य विमिश्रत्वं नित्येऽर्थे नोपपद्यते । । ३,९.९७ । ।
शुद्धे च काले व्याख्यातं आमिश्रे न प्रसिध्यति ।
साधुत्वं अयथाकालं तत्सूत्रेणोपदिश्यते । । ३,९.९८ । ।
आख्यातपदवाच्येऽर्थे निर्वर्त्यत्वात्प्रधानता ।
विशेषणं तदाक्षेपात्तत्काले व्यवतिष्ठते । । ३,९.९९ । ।
संप्रत्ययानुकारो वा शब्दव्यापार एव वा ।
अध्यस्यते विरुद्धेऽर्थे न च तेन विरुध्यते । । ३,९.१०० । ।
भूतं भविष्यदित्येतौ प्रत्ययौ वर्तमानताम् ।
अत्यजन्तौ प्रपद्येते विरुद्धाश्रयरूपताम् । । ३,९.१०१ । ।

अध्वनो वर्तमानस्य विषयेण भविष्यता ।
भाष्ये भविष्यत्कालेति कार्यार्थं व्यपदिश्यते ।। ३,९.१०३ ।।
इच्छा चिकीर्शतीत्यत्र स्वकालं अनुरुध्यते ।
भविष्यति प्रकृत्यर्थे तत्कालं नानुरुध्यते ।। ३,९.१०४ ।।
आशास्यमानतन्त्रत्वादाशंसायां विपर्ययः ।
प्रयोक्तृधर्मः शब्दार्थे शब्दैरेवानुशज्यते ।। ३,९.१०५ ।।
अप्छालिबीजसंयोगे वर्तते निष्पदिर्यदा ।
तत्रावयववृत्तित्वाद्भविष्यत्प्रतिषेधनम् ।। ३,९.१०६ ।।
फलप्रसवरूपे तु निष्पदौ भूतकालता ।
धर्मान्तरेषु तद्रूपं अध्यस्य परिकल्प्यते ।। ३,९.१०७ ।।
उपयुक्ते निमित्तानां व्यापारे फलसिद्धये ।
तत्र रूपं यदध्यस्तं तत्कालं तत्प्रतीयते ।। ३,९.१०८ ।।
निष्पत्तावવધिः कश्चित्कश्चित्प्रतिविवक्षितः ।
हेतुजन्मव्यपेक्षातः फलजन्मेति चोच्यते ।। ३,९.१०९ ।।
अबहिःसाधनाधीना सिद्धिर्यत्र विवक्षिता ।
तत्साधनान्तराभावात्सिद्धं इत्यपदिश्यते ।। ३,९.११० ।।
तस्मादवधिभेदेन सिद्धा मुख्यैव भूतता ।
अनागतत्वं अस्तित्वं हेतुधर्मव्यपेक्षणे ।। ३,९.१११ ।।
सतां इन्द्रियसंबन्धात्सैव सत्ता विशिष्यते ।
भेदेन व्यवहारो हि वस्त्वन्तरनिबन्धनः ।। ३,९.११२ ।।
अस्तित्वं वस्तुमात्रस्य बुद्ध्या तु परिगृह्यते ।
यः समासादनाद्भेदः स तत्र न विवक्षितः ।। ३,९.११३ ।।
योगाद्वा स्त्रीत्वपुंस्त्वाभ्यां न किं चिदवतिष्ठते ।
स्वस्मिन्नात्मनि तत्रान्यद्भूतं भावि च कथ्यते ।। ३,९.११४ ।।

## ३,१०: पुरुषसमुद्देशः

प्रत्यक्ता परभावश्चाप्युपाधी कर्तृकर्मनोः ।
तयोः श्रुतिविशेषेण वाचकौ मध्यमोत्तमौ ।। ३,१०.१ ।।
सदसद्वापि चैतन्यं एताभ्यां अवगम्यते ।
चैतन्यभागे प्रथमः पुरुषो न तु वर्तते ।। ३,१०.२ ।।
बुधिजानातिचितिभिः प्रथमे पुरुषे सति ।
सम्ज्ञानार्थैर्न चैतन्य- स्योपयोगः प्रकाश्यते ।। ३,१०.३ ।।
संबोधनार्थः सर्वत्र मध्यमे कैश्चिदिष्यते ।
तथा संबोधने सर्वां प्रथमां युष्मदो विदुः ।। ३,१०.४ ।।
संबोधनं न लोकेऽस्ति विधातव्येन वस्तुना ।
स्वाहेन्द्रशत्रुर्वर्धस्व यथा राजा भवेति च ।। ३,१०.५ ।।
युष्मदर्थस्य सिद्धत्वान्नियता चाद्युदात्तता ।
युष्मदः प्रथमान्तस्य परश्चेन्न पदादसौ ।। ३,१०.६ ।।
गुणप्रधानताभेदः पुरुशादिविपर्ययः ।
निर्देशश्चान्यथा शास्त्रे नित्यत्वान्न विरुध्यते ।। ३,१०.७ ।।
यथानिर्देशं अर्थाः स्युर्येसां शास्त्रं विधायकम् ।
किं चित्सामान्यं आश्रित्य स्थिते तु प्रतिपादनम् ।। ३,१०.८ ।।
योऽश्वे यः पीठ इत्यत्र भूतयोरश्वपीठयोः ।
यथोपलक्षणार्थत्वं तथार्थेष्वनुशासनम् ।। ३,१०.९ ।।

## ३,११: सङ्ख्यासमुद्देशः

संख्यावान्सत्त्वभूतोऽर्थः सर्व एवाभिधीयते ।
भेदाभेदविभागो हि लोके संख्यानिबन्धनः । । ३,११.१ । ।
स धर्मो व्यतिरिक्तो वा तेषां आत्मैव वा तथा ।
भेदहेतुत्वं आश्रित्य संख्येति व्यपदिश्यते । । ३,११.२ । ।
समवेता परिच्छेद्ये क्व चिदन्यत्र सा स्थिता ।
प्रकल्पयति भावानां संख्या भेदं तथात्मनः । । ३,११.३ । ।
परत्वे चापरत्वे च भेदे तुल्या श्रुतिर्यथा ।
संख्याशब्दाभिधेयत्वं भेदहेतोस्तथा गुणे । । ३,११.४ । ।
अस्वतन्त्रे स्वतन्त्रत्वं परधर्मो यथा गुणे ।
अभेद्ये भेद्यभावोऽपि द्रव्यधर्मस्तथा गुणे । । ३,११.५ । ।
स्वबुद्ध्या तं अपोद्धृत्य लोकोऽप्यागमं आश्रितः ।
स्वधर्मादन्यधर्मेण व्याचष्टे प्रतिपत्तये । । ३,११.६ । ।
परोपकारतत्त्वानां स्वातन्त्र्येनाभिधायकः ।
शब्दः सर्वपदार्थाना स्वधर्मद्विप्रकृष्यते । । ३,११.७ । ।
यथैवाविषयं ज्ञानं न किं चिदवभासते ।
तथा भावोऽप्यसंसृष्टो न कश्चिदुपलभ्यते । । ३,११.८ । ।
भेदेन तु समाख्यातं यल्लोकोऽप्यनुवर्तते ।
आगमाच्छास्त्रसदृशो व्यवहारः स वर्ण्यते । । ३,११.९ । ।
बुद्धौ स्थितेषु तेष्वेवं अध्यारोपो न दुर्लभः ।
परधर्मस्य न ह्यत्र सदसत्त्वं प्रयोजकम् । । ३,११.१० । ।
सामान्येष्वपि सामान्यं विशेषेषु विशिष्टता ।
संख्यासु संख्या लिङ्गेषु लिङ्गं एवं प्रकल्पते । । ३,११.११ । ।
अतो द्रव्याश्रितां संख्यां आहुः संसर्गवादिनः ।
भेदाभेदव्यतीतेषु भेदाभेदविधायिनीम् । । ३,११.१२ । ।
आत्मान्तरानां येनात्मा तद्रूप इव लक्ष्यते ।
अतद्रूपेण संसर्गात्सा निमित्तसरूपता । । ३,११.१३ । ।
संसृष्टेष्वपि निर्भागे भूतेष्वर्थक्रिया यथा ।
सत्त्वादिषु च मात्रासु सर्वास्वेवं प्रतीयते । । ३,११.१४ । ।
द्वित्वादियोनिरेकत्वं भेदास्तत्पूर्वका यतः ।
विना तेन न संख्यानां अन्यासां अस्ति संभवः । । ३,११.१५ । ।
एकत्वे बुद्धिसहिते निमित्तं द्वित्वजन्मनि ।
एकत्वाभ्यां समुत्पन्नं एवं वा तत्प्रतीयते । । ३,११.१६ । ।
एकत्वसमुदायो वा सापेक्षे वा पृथक्पृथक् ।
एकत्वे द्वित्वं इत्येवं तयोर्द्विवचनं भवेत् । । ३,११.१७ । ।
एकोऽपि गुणभेदेन सङ्घो भेदं प्रकल्पयेत् ।
आश्रयाश्रयिभेदो हि तदाश्रयनिबन्धनः । । ३,११.१८ । ।
संख्येयसङ्घसंख्यान- सङ्घः संख्येति कथ्यते ।
विम्शत्यादिसु सान्यस्व द्रव्यसङ्घस्य भेदिका । । ३,११.१९ । ।
एकविंशतिसंख्वावां संख्यान्तरसरूपयोः ।
एकस्यां बुद्ध्यनावृत्त्या, भागयोरिव कल्पना । । ३,११.२० । ।
असंख्यासमुदायत्वात्संख्याकार्यं विधीयते ।
समूहत्वे तु तन्न स्यात्स्वाङ्गादिसमुदायवत् । । ३,११.२१ । ।
संख्येयान्तरतन्त्रासु या संख्यासु प्रवर्तते ।
आवृत्तिवर्गसंख्येया तां संख्यां तादृशीं विदुः । । ३,११.२२ । ।
न संख्यायां न संख्येये द्वौ दशेत्यस्ति संभवः ।
भेदाभावान्न संख्यायां विरोधान्न तदाश्रये । । ३,११.२३ । ।
संख्यायेते दशद्वर्गौ द्विदशा इति संख्यया ।
तद्रूपे वापि संख्येय आवृत्तिः परिगण्यते । । ३,११.२४ । ।
संख्या नाम न संख्यास्ति संज्ञैषेति यथोच्यते ।

रूपं न रूपं अप्येवं सम्ज्ञा सा हि सितादिषु ।। ३,११.२५ ।।
संख्यानजातियोगात्तु संख्या संख्येति कथ्यते ।
रूपत्वजातियोगाच्च रूपे रूपं इति स्मृतम् ।। ३,११.२६ ।।
निमित्तं एकं इत्यत्र विभक्त्या नाभिधीयते ।
तद्वतस्तु यदेकत्वं विभक्तिस्तत्र वर्तते ।। ३,११.२७ ।।
एकस्य प्रचयो दृष्टः समूहश्च द्वयोस्तथा ।
निमित्तव्यतिरेकेण संख्यान्या भेदिका ततः ।। ३,११.२८ ।।
तदेकं अपि चैकत्वं विभक्तिश्रवणादृते ।
नोच्यते तेन शब्देन विभक्त्या तु सहोच्यते ।। ३,११.२९ ।।
अन्वयव्यतिरेकौ च यदि स्याद्वचनान्तरम् ।
स्यातां असति तस्मिम्श्च प्रकृत्यर्थो न कल्प्यते ।। ३,११.३० ।।
एकत्वं एक इत्यत्र शुद्धद्रव्यविशेषणम् ।
सगुणस्तु प्रकृत्यर्थो विभक्त्यर्थेन भिद्यते ।। ३,११.३१ ।।
द्व्येकयोरिति निर्देशात्संख्यामात्रेऽपि संभवः ।
एकादीनां प्रसिद्ध्या तु संख्येयार्थत्वं उच्यते ।। ३,११.३२ ।।

## ३,१२ः उपग्रहसमुद्देशः

य आत्मनेपदाद्भेदः क्व चिदर्थस्य गम्यते ।
अन्यतश्चापि लादेशान्मन्यन्ते तं उपग्रहम् ।। ३,१२.१ ।।
क्व चित्साधनं एवासौ क्व चित्तस्य विशेषणम् ।
साधनं तत्र कर्मादि व्यक्तवाचो विशेषणम् ।। ३,१२.२ ।।
क्रिया विषयभेदेन जीविकादिषु भिद्यते ।
लादेशैः स क्रियाभेदो वाक्येष्वपि नियम्यते ।। ३,१२.३ ।।
धात्वर्थस्तद्विशेषश्चाप्युक्तः क्व चिदुपग्रहः ।
धात्वर्थो गन्धनादिः स्याद्व्यतिहारो विशेषणम् ।। ३,१२.४ ।।
क्रियाप्रवृत्तावाख्याता कैश्चित्स्वार्थपरार्थता ।
असति वा सति वापि विवक्षितनिबन्धना ।। ३,१२.५ ।।
केसां चित्कर्त्रभिप्राये णिचा सह विकल्पते ।
आत्मनेपदं अन्येसां तदर्था प्रकृतिर्यथा ।। ३,१२.६ ।।
क्रीणीष्व वपते धत्ते चिनोति चिनुतेऽपि च ।
आप्तप्रयोगा दृश्यन्ते येषु ण्यर्थोऽभिधीयते ।। ३,१२.७ ।।
संविधानं पचादिनां क्व चिदर्थः प्रतीयते ।
तन्निमित्ता यथान्यापि क्रियाधिश्रयणादिका ।। ३,१२.८ ।।
कर्त्रभिप्रायता सूत्रे क्रियाभेदोपलक्षणम् ।
तथाभूता क्रिया या हि तत्कर्ता फलभाग्यतः ।। ३,१२.९ ।।
यथोपलक्ष्यते कालस्तारकादर्शनादिभिः ।
तथा फलविशेषेण क्रियाभेदो निदर्श्यते ।। ३,१२.१० ।।
क्रियाविशेषवचने सामर्थ्यं उपरुध्यते ।
केसां चिदन्ये तु कृताः स्वरितेतो ञितस्तथा ।। ३,१२.११ ।।
अनुबन्धश्च सिद्धेऽर्थे स्मृत्यर्थं अनुषज्यते ।
तुल्यार्थेष्वपि चावश्यं न सर्वेष्वेकधर्मता ।। ३,१२.१२ ।।
दृशीक्ष्योः सदृशेऽप्यर्थे नाभेदः प्रतिपूर्वयोः ।
ण्यर्थोपादायिनस्तस्मान्न तुल्यार्थाः पचादिभिः ।। ३,१२.१३ ।।
उम्भ्यर्थे वर्तमानस्य करोतेर्भिन्नधर्मणः ।
ण्यर्थोपादायिता तस्मान्नियताः शब्दशक्तयः ।। ३,१२.१४ ।।
तथा ह्यनुप्रयोगस्य करोतेरात्मनेपदे ।
पूर्ववद्ग्रहणं प्राप्ते स्वरितं समुपस्थितम् ।। ३,१२.१५ ।।
एकत्वेऽपि क्रियाख्याते साधनाश्रयसंख्यया ।

भिद्यते न तु लिङ्गाख्यो भेदस्तत्र तदाश्रितः ।। ३,१२.१६ ।।
तस्मादवस्थितेऽप्यर्थे कस्य चित्प्रतिबध्यते ।
शब्दस्य शक्तिः स त्वेष शास्त्रेऽन्वाख्यायते विधिः ।। ३,१२.१७ ।।
यस्यार्थस्य प्रसिद्ध्यर्थं आरभ्यन्ते पचादयः ।
तत्प्रधानं फलं तेषां न लाभादि प्रयोजनम् ।। ३,१२.१८ ।।
यत्रोभौ स्वामिदासौ तु प्रारभेते सह क्रियाम् ।
युगपद्धर्मभेदेन धातुस्तत्र न वर्तते ।। ३,१२.१९ ।।
यत्र प्रतिविधानार्थः पचिस्तत्रात्मनेपदम् ।
परस्मैपदं अन्यत्र संस्काराद्यभिधायिनि ।। ३,१२.२० ।।
संविधातुश्च सांनिध्याद्दासे धर्मोऽनुसज्यते ।
प्लक्षशब्दस्य सांनिध्यान्न्यग्रोधे प्लक्षता यथा ।। ३,१२.२१ ।।
पुरोडाशाभिधानं च धानादिषु यथा स्थितम् ।
छत्त्रिणा चाभिसंबन्धाच्छत्त्रिशब्दाभिधेयता ।। ३,१२.२२ ।।
अर्थात्प्रतीतं अन्योन्यं पारार्थ्यं अविवक्षितम् ।
इत्ययं शेषविषयः कैश्चिदत्रानुवर्ण्यते ।। ३,१२.२३ ।।
अथ प्रतिविधाता यो हलैः कृषति पञ्चभिः ।
भाष्ये नोदाहृतं कस्मात्प्राप्तं तत्रात्मनेपदम् ।। ३,१२.२४ ।।
प्रतीतत्वात्तदर्थस्य शेषत्वं यदि कल्प्यते ।
न स्यात्प्राप्तविभाषासौ स्वरितेतां निवर्तिका ।। ३,१२.२५ ।।
शुद्धे तु संविधानार्थे कैश्चिदत्रेष्यते कृषिः ।
तद्धर्मा यजिरित्येवं न स्यात्तत्रात्मनेपदम् ।। ३,१२.२६ ।।
अत्र तूपपदेनायं अर्थभेदः प्रतीयते ।
प्राप्ते विभाषा क्रियते तस्मान्नात्रात्मनेपदम् ।। ३,१२.२७ ।।

# ३,१३: लिङ्गसमुद्देशः

स्तनकेशादिसंबन्धो विशिष्टा वा स्तनादयः ।
तदुपव्यञ्जना जातिर्गुणावस्था गुणास्तथा ।। ३,१३.१ ।।
शब्दोपजनितोऽर्थात्मा शब्दसंस्कार इत्यपि ।
लिङ्गानां लिङ्गतत्त्वज्ञैर्विकल्पाः सप्त दर्शिताः ।। ३,१३.२ ।।
उपादानविकल्पाश्च लिङ्गानां सप्त वर्णिताः ।
विकल्पसंनियोगाभ्यां ये शब्देषु व्यवस्थिताः ।। ३,१३.३ ।।
तिस्रो जातय एवैताः केसां चित्समवस्थिताः ।
अविरुद्धा, विरुद्धाभिर्गोमहिष्यादिजातिभिः ।। ३,१३.४ ।।
हस्तिन्यां वडवायां च स्त्रीति बुद्धेः समन्वयः ।
अतस्तां जातिं इच्छन्ति द्रव्यादिसमवायिनीम् ।। ३,१३.५ ।।
परतन्त्रस्य यल्लिङ्गं अपोद्धारे विवक्षिते ।
तत्रासौ शब्दसंस्कारः शब्दैरेव व्यपाश्रितः ।। ३,१३.६ ।।
बुद्ध्या कल्पितरूपेषु लिङ्गेष्वपि च संभवः ।
स्त्रीत्वादीनां व्यवस्था हि सा लिङ्गैर्व्यपदिश्यते ।। ३,१३.७ ।।
यथा सलिलनिर्भासा मृगतृष्णासु जायते ।
जलोपलब्ध्यनुगुणाद्बीजाद्बुद्धिर्जलेऽसति ।। ३,१३.८ ।।
तथैवाव्यपदेश्येभ्यो हेतुभ्यस्तारकादिषु ।
मुख्येभ्य इव लिङ्गेभ्यो भेदा लोके व्यवस्थिताः ।। ३,१३.९ ।।
व्यक्तेषु व्यक्तरूपाणां स्तनादीनां तु दर्शनात् ।
अव्यक्तव्यञ्जनाव्यक्तेर्जातिर्न परिकल्प्यते ।। ३,१३.१० ।।
अस्तित्वं च प्रतिज्ञाय सदादर्शनं इच्छतः ।
अत्यन्तादर्शने न स्यादसत्त्वं प्रति निश्चयः ।। ३,१३.११ ।।
न चालं अनुमानाय शब्दोऽदर्शनपूर्वकः ।

सिद्धे हि दर्शने किं स्यादनुमानप्रयोजनम् । । ३,१३.१२ । ।
आविर्भावस्तिरोभावः स्थितिश्चेत्यनपायिनः ।
धर्मा मूर्तिषु सर्वासु लिङ्गत्वेनानुदर्शिताः । । ३,१३.१३ । ।
सर्वमूर्त्यात्मभूतानां शब्दादिनां गुणे गुणे ।
त्रयः सत्त्वादिधर्मास्ते सर्वत्र समवस्थिताः । । ३,१३.१४ । ।
रूपस्य चात्ममात्रानां शुक्लादिनां प्रतिक्षणम् ।
का चित्प्रलीयते का चित्कथं चिदभिवर्धते । । ३,१३.१५ । ।
क्वथितोदकवच्चैषां अनवस्थितवृत्तिता ।
अजस्रं सर्वभावानां भाष्य एवोपवर्णिता । । ३,१३.१६ । ।
प्रवृत्तेरेकरूपत्वं साम्यं वा स्थितिरुच्यते ।
अविर्भावतिरोभाव- प्रवृत्त्या वावतिष्ठते । । ३,१३.१७ । ।
गुणा इत्येव बुद्धेर्वा निमित्तत्वं स्थितिर्मता ।
स्थितेश्च सर्वलिङ्गानां सर्वनामत्वं उच्यते । । ३,१३.१८ । ।
स्थितेषु सर्वलिङ्गेषु विवक्षानियमाश्रयः ।
कस्य चिच्छब्दसंस्कारे व्यापारः क्व चिदिष्यते । । ३,१३.१९ । ।
संनिधाने निमित्तानां किं चिदेव प्रवर्तकम् ।
यथा तक्षादिशब्दानां लिन्गेषु नियमस्तथा । । ३,१३.२० । ।
भावतत्त्वदृशः शिष्टाः शब्दार्थेषु व्यवस्थिताः ।
यद्यद्धर्मेऽङ्गतां एति लिङ्गं तत्तत्प्रचक्षते । । ३,१३.२१ । ।
स्वरभेदाद्यथा शब्दाः साधवो विषयान्तरे ।
लिङ्गभेदात्तथा सिद्धात्साधुत्वं अनुगम्यते । । ३,१३.२२ । ।
प्रयोगो विप्रयोगश्च लोके यत्रोपलभ्यते ।
शास्त्रं आरभ्यते तत्र न प्रयोगाविपर्यये । । ३,१३.२३ । ।
उपाधिभेदादर्थेषु गुणधर्मस्य कस्य चित् ।
निमित्तभावः साधुत्वे विवक्षा च व्यवस्थिता । । ३,१३.२४ । ।
हिमारण्ये महत्त्वेन युक्ते स्त्रीत्वं अवस्थितम् ।
ह्रस्वोपाधिविशिष्टायाः कुट्याः प्रसवयोगिता । । ३,१३.२५ । ।
शब्दान्तरानां भिन्नेऽर्थ उपायाः प्रतिपत्तये ।
एकतां इव निश्चित्य लघ्वर्थं उपदर्शिताः । । ३,१३.२६ । ।
उत्पत्तिः प्रसवोऽन्येषां नाशः संस्त्यानं इत्यपि ।
आत्मरूपं तु भावानां स्थितिरित्यपदिश्यते । । ३,१३.२७ । ।
दृष्टं निमित्तं केसां चिज्जात्यादिवदवस्थितम् ।
दृष्टवच्छब्दसंस्कार- मात्रं तु परिकल्पितम् । । ३,१३.२८ । ।
यथा प्रसिद्धेऽप्येकत्वे नानात्वाभिनिवेशिनः ।
नानात्वं जनयन्तीव शब्दा लिङ्गेऽपि स क्रमः । । ३,१३.२९ । ।
इदं वेयं अयं वेति शब्दसंस्कारमात्रकम् ।
निमित्तदर्शनादर्थे कैश्चित्सर्वत्र वर्ण्यते । । ३,१३.३० । ।
नावश्यं विषयत्वेन निमित्तं व्यवतिष्ठते ।
इन्द्रियादि यथादृष्टं भेदहेतुस्तदिष्यते । । ३,१३.३१ । ।

# ३,१४: वृत्तिसमुद्देशः

कुत्साप्रशंसातिशयैः समाप्तार्थं तु युज्यते ।
पदं स्वार्थादयः सर्वे यस्मात्कुत्सादिहेतवः । । ३,१४.१ । ।
देवदत्तादिकुत्सायां वर्तते कुत्सितश्रुतिः ।
कुत्सितस्था तु या कुत्सा तदर्थः को विधीयते । । ३,१४.२ । ।
प्रकृष्ट इति शुक्लादि- प्रकर्षस्याभिधायकः ।
प्रकृष्टस्य प्रकर्षे तु तरबादिर्विधीयते । । ३,१४.३ । ।
कुत्सितत्वेन कुत्स्यो वा न सम्यग्वापि कुत्सितः ।

स्वशब्दाभिहिते केन विशिष्टोऽर्थः प्रतीयते । । ३,१४.४ । ।
न च सांप्रतिकी कुत्सा भेदाभावात्प्रतीयते ।
पूज्यते कुत्सितत्वेन प्रशस्तत्वेन कुत्स्यते । । ३,१४.५ । ।
विशेषणविशेष्यत्वं पदयोरुपजायते ।
न प्रातिपदिकार्थश्च तत्रैव व्यतिरिच्यते । । ३,१४.६ । ।
विशेष्यं स्यादनिर्ज्ञातं निर्ज्ञातोऽर्थो विशेषणम् ।
परार्थत्वेन शेषत्वं सर्वेषां उपकारिणाम् । । ३,१४.७ । ।
विभक्तिभेदो नियमाद्गुणगुण्यभिधायिनोः ।
सामानाधिकरण्यस्य प्रसिद्धिर्द्रव्यशब्दयोः । । ३,१४.८ । ।
द्रव्येऽनिर्ज्ञातजातीये कृष्णशब्दः प्रयुज्यते ।
अनिर्ज्ञातगुणे चैवं तिलशब्दः प्रवर्तते । । ३,१४.९ । ।
सामान्यानां असंबन्धात्तौ विशेषे व्यवस्थितौ ।
रूपाभेदाद्विशेषं तं अभिव्यङ्क्तुं न शक्नुतः । । ३,१४.१० । ।
तावेव संनिपतितौ भेदेन प्रतिपादने ।
अवच्छेदं इवाधाय संशयं व्यपकर्षतः । । ३,१४.११ । ।
द्रव्यात्मा गुणसंसर्ग- भेदादाश्रीयते पृथक् ।
जातिसंबन्धभेदाच्च द्वितीय इव गृह्यते । । ३,१४.१२ । ।
निमित्तैरभिसंबन्धाद्या निमित्तसरूपता ।
तयैकस्यापि नानात्वं रूपभेदात्प्रकल्पते । । ३,१४.१३ । ।
द्रव्यावस्था तृतीया तु यस्यां संसृज्यते द्वयम् ।
तयोरवस्थयोर्भेदादाश्रयत्वे नियुज्यते । । ३,१४.१४ । ।
बुद्ध्यैकं भिद्यते भिन्नं एकत्वं चोपगच्छति ।
बुद्ध्यावस्था विभज्यन्ते सा ह्यर्थस्य विधायिका । । ३,१४.१५ । ।
व्यपदेशिवदेकस्मिन्बुद्ध्या नानात्वकल्पना ।
तया कल्पितभेदः सन्नर्थात्मा व्यपदिश्यते । । ३,१४.१६ । ।
क्रियाभेदेन दृष्टानां अश्मादीनां पुनः पुनः ।
किं चिद्दर्शनं अन्येन दर्शनेनापदिश्यते । । ३,१४.१७ । ।
प्रयोगभेदाद्धातूनां प्रकल्प्य बहुरूपताम् ।
भेदाभेदावुपादाय क्व चिदेकात्त्वं उच्यते । । ३,१४.१८ । ।
अन्वयव्यतिरेकाभ्यां अर्थवान्परिकल्पितः ।
एको धात्वर्थविगमाद्वर्णत्वेनोपचर्यते । । ३,१४.१९ । ।
द्रव्यात्मानस्त्रयस्तस्माद्बुद्धौ नाना व्यवस्थिताः ।
आश्रयाश्रयिधर्मेणेत्ययं पूर्वेभ्य आगमः । । ३,१४.२० । ।
सामानाधिकरण्यं च शब्दयोः कैश्चिदिष्यते ।
विशेषणविशेष्यत्वं संज्ञासंज्ञित्वं एव च । । ३,१४.२१ । ।
केषां चिज्जातिगुणयोरेकार्थसमवेतयोः ।
वृत्तिः कृष्णतिलेष्विष्टा शब्दे द्रव्याभिधायिनि । । ३,१४.२२ । ।
संस्तु रूपरसादिनां आश्रयो नाभिधीयते ।
द्रव्याभिधानेन विना ततस्ते द्वन्द्वभाविनः । । ३,१४.२३ । ।
द्रव्याभिधायी कृष्णादिराकाङ्क्षावान्प्रवर्तते ।
निमित्तानुविधायित्वात्तत्तिलादौ न विद्यते । । ३,१४.२४ । ।
एवं जातिमति द्रव्ये प्रत्यासन्ने क्रियां प्रति ।
गुणधर्म गुणाविष्टं द्रव्यं भेदाय कल्पते । । ३,१४.२५ । ।
गुणमात्राभिधायित्वं के चिदिच्छन्ति वृत्तिषु ।
अजाश्वादिषु संबन्धाद्रूढीनां इव रूढिभिः । । ३,१४.२६ । ।
तिले पूर्वं उपात्ते वा तत्रैव मतुबिष्यते ।
स च धर्मः समासेषु गुणस्तस्माद्विशेषणम् । । ३,१४.२७ । ।
[पट्वीमृद्व्योः समासे तु यद्यप्येकार्थवृत्तिता ।
भिन्नं अत्राधिकरणं प्राग्वृत्तेस्तच्च गृह्यते । । ३,१४.२८ * । ।

अनुस्यूतेव भेदाभ्यां एका प्रख्योपजायते ।
यदा सहविवक्षां तां आहुर्द्वन्द्वैकशेषयोः । । ३,१४.२९ । ।
इतरेतरयोगस्तु भिन्नसङ्घाभिधायिनाम् ।
प्रत्येकं च समूहोऽसौ समूहिषु समाप्यते । । ३,१४.३० । ।
व्यापारसमुदायस्य यथाधिश्रयणादिषु ।
प्रत्येकं जातिवद्वृत्तिस्तथा द्वन्द्वपदेष्वपि । । ३,१४.३१ । ।
शौण्डार्धर्चपुरोडाश- च्छत्त्रिणोऽत्र निदर्शनम् ।
ते विष्णुमित्रा इति च भिन्नेषु सहचारिषु । । ३,१४.३२ । ।
अर्थान्तराभिधायित्वं तथार्थान्तरवर्तिनाम् ।
याभ्यां चैकं अनेकार्थं ताभ्यां एवापरं पदम् । । ३,१४.३३ । ।
समुदायान्तरत्वाच्च तादृशोऽर्थो न लौकिकः ।
अन्वयव्यतिरेकाभ्यां शास्त्रार्थोऽपि न दृश्यते । । ३,१४.३४ । ।
दुःखा दुरुपपादा च तस्माद्भाष्येऽप्युदाहृता ।
युगपद्वाचिता सा तु व्यवहारार्थं आश्रिता । । ३,१४.३५ । ।
समुदायं उपक्रम्य पदं तस्यां प्रयुज्यते ।
विभागेन समाख्याने ततस्तद्व्यर्थं उच्यते । । ३,१४.३६ । ।
वाक्येऽपि नियता धर्माः के चिद्वृत्तौ द्वयोस्तथा ।
ते त्वभेदेन सामर्थ्य- मात्र एवोपवर्णिताः । । ३,१४.३७ । ।
वृत्तौ विशेषवृत्तित्वाद्भेदे सामान्यवाचिता ।
उपमानसमासादौ श्यामादीनां उदाहृता । । ३,१४.३८ । ।
वृत्तिरन्यपदार्थे या तस्या वाक्येष्वसंभवः ।
चार्थे द्वन्द्वपदानां च भेदे वृत्तिर्न विद्यते । । ३,१४.३९ । ।
भेदे सति निरादीनां क्रान्ताद्यर्थेष्वसंभवः ।
प्राग्वृत्तेर्जातिवाचित्वं न च गौरखरादिषु । । ३,१४.४० । ।
क्रीडाया, जीविकायाश्च वाक्येनावचनात्तथा ।
न नित्यग्रहणं युक्तं कौटिल्ये यङ्विधौ यथा । । ३,१४.४१ । ।
निर्धारणादिविषये व्यपेक्षैव यतः स्थिता ।
समासप्रतिषेधानां ततो नास्ति प्रयोजनम् । । ३,१४.४२ । ।
विधिभिः प्रतिषेधैश्च भेदाभेदनिदर्शनम् ।
कृतं द्वन्द्वैकवद्भावे सङ्घवृत्त्युपदेशवत् । । ३,१४.४३ । ।
सामर्थ्यं अविशेषोक्तं अपि लोकव्यवस्थया ।
वृत्त्यवृत्त्योः प्रयोगज्ञैर्विभक्तं प्रतिपत्तृभिः । । ३,१४.४४ । ।
अर्थस्य विनिवृत्तत्वाल्लुगादि न विरुध्यते ।
एकार्थीभाव एवातः समासाख्या विधीयते । । ३,१४.४५ । ।
व्यवस्थितविभाषा च सामान्ये कैश्चिदिष्यते ।
तथा वाक्यं व्यपेक्षायां समासोऽन्यत्र शिष्यते । । ३,१४.४६ । ।
तुल्यश्रुतित्वात्तत्त्वेऽपि राजादीनां उपाश्रिते ।
वृत्तौ विशेषणाकाङ्क्षा- गमकत्वान्निवर्तते । । ३,१४.४७ । ।
संबन्धिशब्दः सापेक्षो नित्यं सर्वः प्रयुज्यते ।
स्वार्थवत्सा व्यपेक्षास्य वृत्तावपि न हीयते । । ३,१४.४८ । ।
समुदायेन संबन्धो येसां गुरुकुलादिना ।
संस्पृश्यावयवांस्तेऽपि युज्यन्ते तद्वता सह । । ३,१४.४९ । ।
अबुधान्प्रत्युपायाश्च विचित्राः प्रतिपत्तये ।
शब्दान्तरत्वादत्यन्त- भेदो वाक्यसमासयोः । । ३,१४.५० । ।
असमासे समासे च गोरथादिष्वदर्शनात् ।
युक्तादिनां न शास्त्रेण निवृत्त्यनुगमः कृतः । । ३,१४.५१ । ।
शब्दान्तरत्वाद्युक्तादिः क्व चिद्वाक्ये प्रयुज्यते ।
प्रपर्णप्रपलाशादौ गतशब्दश्च वृत्तिषु । । ३,१४.५२ । ।
विशेषणविशेस्यत्वं कैश्चिदेकस्तथाश्रयः ।

उपाये तत्त्वदर्शित्वादिष्यते वृत्तिवाक्ययोः । । ३,१४.५३ । ।
पदं यथैव वृक्षादि विशिष्टेऽर्थे व्यवस्थितम् ।
नीलोत्पलाद्यपि तथा भागाभ्यां वर्तते विना । । ३,१४.५४ । ।
श्रोत्रियक्षेत्रियादिनां न च वासिष्ठगार्ग्यवत् ।
भेदेन प्रत्ययो लोके तुल्यरूपासमन्वयात् । । ३,१४.५५ । ।
सप्तपर्णादिवद्भेदो न वृत्तौ विद्यते क्व चित् ।
रूढ्यरूढिविभागोऽपि क्रियते प्रतिपत्तये । । ३,१४.५६ । ।
या सामान्याश्रया संज्ञा विशेषविषया च या ।
बहुलग्रहणान्नास्ति प्रवृत्तिरुभयोस्तयोः । । ३,१४.५७ । ।
सुसूक्ष्मजटकेशादौ समासोऽवयवे यदि ।
स्यात्स्यात्तत्रान्तरङ्गत्वाद्बाधकोऽवयवस्वरः । । ३,१४.५८ । ।
समुदायस्य वृत्तौ च नैकदेशो विभाष्यते ।
भेद एव विभाषाया नियतो विषयो यतः । । ३,१४.५९ । ।
यतश्चाविषयः सोऽस्यास्तस्मान्नास्त्यकृतार्थता ।
अभेदप्रक्रमेऽत्यन्तं भेदानां अपसारणात् । । ३,१४.६० । ।
महाकष्टश्रितेत्येवं न स्याद्भेदः पदत्रये ।
वृत्ताववयवस्यात्त्वं यस्मान्न प्रतिषिध्यते । । ३,१४.६१ । ।
महारण्यं अतीते तु त्रिपदाद्भिद्यते स्वरः ।
यस्मात्तत्रान्तरङ्गत्वाद्बाधकोऽवयवस्वरः । । ३,१४.६२ । ।
सतिशिष्टबलियस्त्वात्थाथादिस्वर एव तु ।
द्विपदे तेन यगपत्त्रितयं न समस्यते । । ३,१४.६३ । ।
येषां अपूज्यमानत्वं परार्थानुगमात्मके ।
विशेषणविशेष्यत्वं अपि तेषां न कल्पते । । ३,१४.६४ । ।
विशेषः श्रूयमाणोऽपि प्रधानेषु गुणेषु वा ।
शब्दान्तरत्वाद्वाक्ये तु वृत्तौ नित्यं न विद्यते । । ३,१४.६५ । ।
विशेषकर्मसंबन्धे निर्भुक्तेऽपि कृतादिभिः ।
विशेषनिरपेक्षोऽन्यः कृतशब्दः प्रवर्तते । । ३,१४.६६ । ।
अकर्मकत्वे सत्येवं क्तान्तं भावाभिधायि तत् ।
ततः क्रियावता कर्त्रा योगो भवति कर्मणाम् । । ३,१४.६७ । ।
अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः ।
संबध्यते क्रिया तद्वत्कृतपूर्व्यादिषु स्थिता । । ३,१४.६८ । ।
मुण्डिसूत्र्वादयोऽसद्भिर्भागैरनुगता इव ।
विभक्ताः कल्पितात्मानो धातवः कुट्टिचर्चिवत् । । ३,१४.६९ । ।
पुत्रीयतौ न पुत्रोऽस्ति विशेषेच्छा तु तादृशी ।
विनैव पुत्रानुगमाद्या पुत्रे व्यवतिष्ठते । । ३,१४.७० । ।
प्राणैर्विना यथा धारिर्जीवतौ प्राणकर्मकः ।
न चात्र धारिर्न प्राणा जीवतिस्तु क्रियान्तरम् । । ३,१४.७१ । ।
तथा विनेषिपुत्राभ्यां पुत्रीयायां क्रियान्तरम् ।
अन्वाख्यानाय भेदास्तु सदृशाः प्रतिपादकाः । । ३,१४.७२ । ।
आक्षेपाच्च प्रयोगे.न विषयान्तरवर्तिना ।
सदपीच्छाक्यचः कर्म वाक्य एव प्रयुज्यते । । ३,१४.७३ । ।
प्रसिद्धेन हृतः शब्दो भावगर्हाभिधायिना ।
अभ्यासे तुल्यरूपत्वान्न यङन्तः प्रयुज्यते । । ३,१४.७४ । ।
शब्दा यथा विभज्यन्ते भागैरिव विकल्पितैः ।
अन्वाख्येयास्तथा शास्त्रं अतिदूरे व्यवस्थितम् । । ३,१४.७५ । ।
अर्थस्यानुगमं कं चिद्दृष्ट्वैव परिकल्पितम् ।
पदं वाक्ये पदे धातुर्धातौ भागश्च मुण्डिवत् । । ३,१४.७६ । ।
अविप्रयोगः साधुत्वे व्युत्पत्तिरनवस्थिता ।
उपायान्प्रतिपत्तीनां नाभिमन्येत सत्यतः । । ३,१४.७७ । ।

यथैव डित्थे दवतिः पाचके पचतिस्तथा ।
डयतिश्च पचिश्चैव द्वावप्येतावलौकिकौ ।। ३,१४.७८ ।।
प्रकृतिप्रत्ययावूह्यौ पदात्ताभ्यां पदं तथा ।
अनुबन्धस्वरादिभ्यः शिष्टैः शास्त्रं न तान्प्रति ।। ३,१४.७९ ।।
शास्त्रदृष्टिस्तु शास्त्रस्य प्राप्तिमात्रेऽप्यनिश्चिते ।
युज्यते प्रत्यवायेन शास्त्रं चक्षुरपश्यताम् ।। ३,१४.८० ।।
अर्थान्तराभिधानाच्च पौर्वापर्यं न भिद्यते ।
राजदन्ताहिताग्न्यादि- राजाश्वादिषु सर्वथा ।। ३,१४.८१ ।।
विनैव प्रत्ययैर्वृत्तौ ये भिन्नार्थाभिधायिनः ।
गर्गादयो लुका तेषां साधुत्वं अनुगम्यते ।। ३,१४.८२ ।।
[सोऽयं इत्यभिसंबन्धात्प्रत्ययेन विना यदि ।
भृग्वादयः प्रयुज्येरन्नापत्ये नियमो भवेत् ।। ३,१४.८३ * ।।
सोऽयं इत्यभिसंबन्धे लिङ्गोपव्यञ्जनादृते ।
प्रष्ठादिषु न जायैव नियमेन प्रतीयते ।। ३,१४.८४ ।।
मानमेयाभिसंबन्ध- विशेषेऽङ्गीकृते तथा ।
प्रस्थादीनां असाधुत्वं तद्धितेन विना भवेत् ।। ३,१४.८५ ।।
तद्धितो योगभेदेन वाक्यं वा स्याद्विभाषितम् ।
परिमाणाधिके तत्र प्रथमा शिष्यते पुनः ।। ३,१४.८६ ।।
व्यतिरिक्तस्य साधुत्वे तदेव च निदर्शनम् ।
युज्यतेऽङ्गीकृताधिक्यं तत्सर्वाभिर्विभक्तिभिः ।। ३,१४.८७ ।।
शुक्लादिषु मतुब्लोपो व्यतिरेकस्य दर्शनात् ।
असाधुत्वनिवृत्त्यर्थं साधवस्ते बिदादिवत् ।। ३,१४.८८ ।।
विशेषणाद्विशेष्येऽर्थे तद्भावाभ्युच्चये सति ।
पुनश्च प्रतिसंहारे वृत्तिं एके प्रचक्षते ।। ३,१४.८९ ।।
निमित्ते प्रत्ययः पूर्वो नानुप्राप्तो निमित्तिना ।
निमित्तवति बुद्धेश्च न निमित्तसरूपता ।। ३,१४.९० ।।
संस्कारसहिताज्ज्ञानान्नोपश्लेसः स्मृतेरपि ।
व्यापारे तन्निमित्तानां न ग्राह्यं स्यात्तथा स्थितम् ।। ३,१४.९१ ।।
अन्तःकरणवृत्तौ च व्यर्था बाह्यार्थकल्पना ।
तस्मादनुपकारे वा ग्राह्यं वा न तथा स्थितम् ।। ३,१४.९२ ।।
अनुस्यूतेव संसृष्टैरर्थे बुद्धिः प्रवर्तते ।
व्याख्यातारो विभज्यार्थांस्तान्भेदेन प्रचक्षते ।। ३,१४.९३ ।।
तदात्मन्यविभक्ते च बुद्ध्यन्तरं उपाश्रिताः ।
विभागं इव मन्यन्ते विशेषणविशेष्ययोः ।। ३,१४.९४ ।।
अबुधान्प्रति वृत्तिं च वर्तयन्तः प्रकल्पिताम् ।
आहुः परार्थवचने त्यागाभ्युच्चयधर्मताम् ।। ३,१४.९५ ।।
अन्वयाद्गम्यते सोऽर्थो विरोधी वा निवर्तते ।
द्व्यर्थं अर्थान्तरे वापि तत्राहुरुपसर्जनम् ।। ३,१४.९६ ।।
उपायमात्रं नानात्वं समूहस्त्वेक एव सः ।
विकल्पाभ्युच्चयाभ्यां वा भेदसंसर्गकल्पना ।। ३,१४.९७ ।।
वृत्तिं वर्तयतां एवं अबुधप्रतिपत्तये ।
भिन्नाः संबोधनोपायाः पुरुषेष्वनवस्थिताः ।। ३,१४.९८ ।।
वाचिका द्योतिका वापि संख्यानां वा विभक्तयः ।
तद्रूपेऽवयवे वृत्तौ संख्याभेदो निवर्तते ।। ३,१४.९९ ।।
अभेदैकत्वसंख्या वा तत्रान्यैवोपजायते ।
संसर्गरुपं सैंख्यानां अविभक्तं तदुच्यते ।। ३,१४.१०० ।।
यथौषधिरसाः सर्वे मधुन्याहितशक्तयः ।
अविभागेन वर्तन्ते तां संख्यां तादृशीं विदुः ।। ३,१४.१०१ ।।
भेदानां वा परित्यागात्संख्यात्मा स तथाविधः ।

व्यापाराज्जातिभागस्य भेदापोहेन वर्तते । । ३,१४.१०२ । ।
अगृहीतविशेषेण यथा रूपेण रूपवान् ।
प्रख्यायते न शुक्लादि- भेदरूपस्तु गृह्यते । । ३,१४.१०३ । ।
भेदरूपसमावेशे तथा सत्यविवक्षिते ।
भागः प्रकाशितः कश्चिच्छास्त्रेऽङ्गत्वेन गृह्यते । । ३,१४.१०४ । ।
संकःयासामान्यरूपेण तदा सोऽम्शः प्रतीयते ।
अर्थस्यानेकशक्तित्वे शब्दैर्नियतशक्तिभिः । । ३,१४.१०५ । ।
अव्ययानां च यो धर्मो यश्च भेदवतां क्रमः ।
अभिन्नव्यपदेशार्हं अन्तरालं तदेतयोः । । ३,१४.१०६ । ।
अलुकश्चैकवद्भावस्तस्मिन्सति न शिष्यते ।
स च गोषुचरादीनां धर्मोऽस्ति वचनान्तरे । । ३,१४.१०७ । ।
जातौ द्विवचनाभावात्तद्वृत्तिषु न विद्यते ।
प्रत्याख्याने तु योगस्य द्रव्ये गोषुचरादयः । । ३,१४.१०८ । ।
आश्रयाद्भेदवत्तायाः सर्वभेदसमन्वयः ।
द्रव्याभिधानपक्षोऽपि जात्याख्यायां न विद्यते । । ३,१४.१०९ । ।
सर्वद्रव्यगतिश्चैवं एकशेषश्च नोच्यते ।
प्रत्याख्यातेऽन्यथा सूत्रे भिन्नद्रव्यगतिर्भवेत् । । ३,१४.११० । ।
वृत्तौ यो युक्तवद्भावो वरणादिषु शिष्यते ।
अभेदैकत्वसंख्यायां गोदौ तत्र न सिध्यति । । ३,१४.१११ । ।
प्राग्वृत्तेर्युक्तवद्भावे षष्ठी भेदाश्रया भवेत् ।
वृत्तौ संख्याविशेषाणां त्यागाद्भेदो निवर्तते । । ३,१४.११२ । ।
विद्यमानासु संख्यासु के चित्संख्यान्तरं विदुः ।
अभेदाख्यं उपग्राहि वृत्तौ तच्चोपजायते । । ३,१४.११३ । ।
व्यापारं याति भेदाख्यैस्तत्स्वैरवयवैः क्व चित् ।
आत्मा भेदानपेक्षोऽस्य क्व चिदेति निमित्तताम् । । ३,१४.११४ । ।
दास्याः पतिरिति व्यक्तो गोदाविति च दृश्यते ।
व्यापारभेदः संख्यायास्तस्मादेव व्यवस्थितः । । ३,१४.११५ । ।
द्व्यादिनां च द्विपुत्रादौ बाह्यो भेदो निवर्तते ।
विभक्तिवाच्यः स्वार्थत्वान्निमित्तं त्ववतिष्ठते । । ३,१४.११६ । ।
द्वित्वोपसर्जने सङ्घे द्विशब्दस्तत्र वर्तते ।
सोऽयं इत्यभिसंबन्धादुभशब्दे न तत्तथा । । ३,१४.११७ । ।
उभयस्तत्र तुल्यार्थो वृत्तौ नित्यं प्रयुज्यते ।
सूत्रेऽपि नित्यग्रहणं तदर्थं अभिधीयते । । ३,१४.११८ । ।
आपि के चापरार्थत्वान्नाभेद उपजायते ।
उभे इति ततः स्वार्थे भेदे वृत्तिः प्रयुज्यते । । ३,१४.११९ । ।
स्त्रीत्वाभिधानपक्षेऽपि गुणभावविपर्ययः ।
स्वभावादपरार्थत्वात्तत्र भेदो न हीयते । । ३,१४.१२० । ।
तस्माद्द्विवचनाट्टापश्चोभयोऽन्यत्र दृश्यते ।
प्रत्ययं तयपं हित्वा नास्त्युत्तरपदे पुनः । । ३,१४.१२१ । ।
प्राप्तिः प्रगृह्यसंज्ञाया न स्यात्प्रत्ययलक्षणात् ।
कुमार्यगारे न ह्यस्ति समासो वचनान्तरे । । ३,१४.१२२ । ।
एकद्वयोर्यत्रादिनां विभाषा लुङ्न कल्पते ।
यौष्माकस्तावकश्चेति भेदाभावान्न सिध्यति । । ३,१४.१२३ । ।
दृष्टो गार्ग्यतरे भेदस्तथा गर्गतरा इति ।
युष्मत्पिता त्वत्पितेति तथादेशौ व्यवस्थितौ । । ३,१४.१२४ । ।
उपाधिभूता या संख्या प्रकृतौ समवस्थिता ।
आदेशैः सम्ज्नया वापि विभक्त्या व्यज्यते विना । । ३,१४.१२५ । ।
शौर्पिके मासजाते च परिमाणं स्वभावतः ।
उपाधिभूतां आश्रित्य संख्यां भेदेन वर्तते । । ३,१४.१.२६ । ।

वयस्विनि परिच्छेदः क्रीते चापि न गम्यते ।
इष्टोऽभेदादृते तत्र पतिमाणं अनर्थकम् । । ३,१४.१२७ । ।
भिन्नस्याभेदवचनात्प्रस्थादिभ्यः शसो विधिः ।
तद्धर्मत्वादभेदात्तु घटादिभ्यो न दृश्यते । । ३,१४.१२८ । ।
श्रूयते वचनं यत्र भावस्तत्र विशिष्यते ।
निवर्तते यद्वचनं तस्य भावो न विद्यते । । ३,१४.१२९ । ।
कार्यं सत्ताश्रयं शास्त्रादप्रवृत्तिरदर्शनम् ।
वाक्ये दृष्टं यदत्यन्तं अभावस्तस्य वृत्तिषु । । ३,१४.१३० । ।
सम्ज्ञाविषयभेदार्थं प्रसक्तादर्शनं स्मृतम् ।
श्रूयमानं तु वचनं विशिष्टं उपलभ्यते । । ३,१४.१३१ । ।
अभावो वा लुको यत्र रूपवान्वा विधीयते ।
व्यभिचारान्निमित्तस्य तत्रासाधुः प्रसज्यते । । ३,१४.१३२ । ।
भेदः संख्याविशेषो वा व्याख्यातो वृत्तिवाक्ययोः ।
सर्वत्रैव विशेषस्तु नावश्यं तादृशो भवेत् । । ३,१४.१३३ । ।
आतेश्च भेदहेतुत्वान्न लिङ्गेन विशेष्यते ।
प्रधानं मृगदुग्धादौ गार्गीपुत्रे न स क्रमः । । ३,१४.१३४ । ।
अभेदे लिङ्गसंख्याभ्यां योगाच्छुक्लं पटा इति ।
प्रसक्ते शास्त्रं आरब्धं सिद्धये लिङ्गसंख्ययोः । । ३,१४.१३५ । ।
परार्थं शेषभावं यो वृत्तिषु प्रतिपद्यते ।
गुणो विशेषणत्वेन स सूत्रे व्यपदिश्यते । । ३,१४.१३६ । ।
शब्दान्तरत्वाद्वाक्येषु विशेषा यद्यपि श्रुताः ।
वृत्तेरभिन्नरूपत्वात्तेषु वृत्तिर्न विद्यते । । ३,१४.१३७ । ।
रूपाच्च शब्दसंस्कारः सामान्यविषयो यतः ।
तस्मात्तदाश्रयं लिङ्गं वचनं च प्रसज्यते । । ३,१४.१३८ । ।
सलिङ्गं च ससंख्यं च ततो द्रव्याभिधायिना ।
संबध्यते पदं तत्र तयोर्भिन्ना श्रुतिर्भवेत् । । ३,१४.१३९ । ।
भाविनो बहिरङ्गस्य वचनादाश्रयस्य ये ।
लिङ्गसंख्ये गुणानां ते सूत्रेण प्रतिपादिते । । ३,१४.१४० । ।
विशेषवृत्तेरपि च रूपाभेदादलक्षितः ।
यस्माद्विशेषस्तेनात्र भेदकार्यं न कल्पते । । ३,१४.१४१ । ।
विशेष एव सामान्यं विशेसाद्भिद्यते यतः ।
अभेदो हि विशेषाणां आश्रितो विनिवर्तकः । । ३,१४.१४२ । ।
यद्यदाश्रीयते तत्तदन्यस्य विनिवर्तकम् ।
भेदाभेदविभागस्तु सामान्ये न निरूप्यते । । ३,१४.१४३ । ।
अपोद्धारश्च सामान्यं इति तस्योपकारिनः ।
निमित्तावस्थं एवातस्तत्स्वधर्मेण गृह्यते । । ३,१४.१४४ । ।
अनिर्धारितधर्मत्वाद्भेदा एव विकल्पिताः ।
निमित्तैर्व्यपदिश्यन्ते सामान्याख्याविशेसिताः । । ३,१४.१४५ । ।
यदा तु व्यपदिश्येते लिङ्गसंख्ये स्वभावतः ।
प्रयोगेष्वेव साधुत्वं वाक्ये प्रक्रम्यते तदा । । ३,१४.१४६ । ।
तत्र प्रयोगोऽनियतो गुणानां आश्रयैः सह ।
सामान्यं यत्तदत्यन्तं तत्रैव समवस्थितम् । । ३,१४.१४७ । ।
न गोत्वं शाबलेयस्य गौरिति व्यपदिश्यते ।
शुक्लत्वं बाहुलेयस्य शुक्ल इत्यपदिश्यते । । ३,१४.१४८ । ।
व्यतिरेके च सत्येवं मतुपः श्रवनं भवेत् ।
लुगन्वाख्यायते तस्माद्रसादिभ्यश्च नास्ति सः । । ३,१४.१४९ । ।
यत्सोऽयं इति संबन्धाद्रूपाभेदेन वर्तते ।
शुक्लादिवत्ततो लोपस्तद्रसादौ न विद्यते । । ३,१४.१५० । ।
आवेशो लिङ्गसंख्याभ्यां क्व चिन्मञ्चादिवत्स्थितह् ।

सोऽयं इत्यभिसंबन्धे स प्रस्थादौ न विद्यते । । ३,१४.१५१ । ।
लिङ्गं लिङ्गपरित्यागे सूत्रं प्रत्ययशासनम् ।
सोऽयं इत्यभिसंबन्धात्पुंशब्दे स्त्र्यभिधायिनि । । ३,१४.१५२ । ।
आश्रये लिङ्गसंख्याभ्यां आश्रितं व्यपदिश्यते ।
विशेषणानां चाजातेरिति शास्त्रव्यवस्थया । । ३,१४.१५३ । ।
निमित्तानुविधायित्वाद्ये धर्मा भेदहेतुषु ।
त आश्रयेऽपि विद्यन्त इति बुद्धिर्निवर्त्यते । । ३,१४.१५४ । ।
आख्यायते च शास्त्रेण लोकरूढा स्वभावतः ।
निमित्ततुल्या गोदादौ प्रवृत्तिर्लिङ्गसंख्ययोः । । ३,१४.१५५ । ।
हरितक्यादिषु व्यक्तिः संख्या खलतिकादिषु ।
मनुष्यलुब्विशेषाणां अभिधेयाश्रयं द्वयम् । । ३,१४.१५६ । ।
जातिप्रयोगे जात्या चेत्संबन्धं उपगच्छति ।
विशेषणं ततो धर्मात्र् जातेस्तत्प्रतिपद्यते । । ३,१४.१५७ । ।
लुबन्ते संनिपतितं जातेरन्यद्विशेषणम् ।
लुबन्तस्य प्रधानत्वात्तद्धर्मैर्व्यपदिश्यते । । ३,१४.१५८ । ।
नञ्समासबहुव्रीहि- द्वन्द्वस्त्र्यतिशयेषु ये ।
भेदा भाष्यानुसारेण वाच्यास्ते लिङ्गसंख्ययोः । । ३,१४.१५९ । ।
यदि षष्ठीद्वितीयान्तान्निकृष्टात्तमबादयः ।
न्यक्कारिणि स्युरुत्कृष्टे प्रकृतेः स्याद्विलिङ्गता । । ३,१४.१६० । ।
काल्यां कालाद्द्वितीयान्तात्काले काल्यास्तरब्भवेत् ।
न्यक्कारिणि तथा गार्ग्ये गर्गेभ्यः प्रत्ययो भवेत् । । ३,१४.१६१ । ।
न्यक्कर्तृषु च गर्गेषु गार्ग्यात्स्यात्तच्च नेष्यते ।
कुमार्याः स्वार्थिके ङीप्स्यात्प्रकृत्यर्थो हि नाधिकः । । ३,१४.१६२ । ।
षष्ठ्यन्तादधिके तस्माद्गुणे स्वाश्रयवर्तिनि ।
उत्कृष्टसमवेतायां क्रियायां वा विधीयते । । ३,१४.१६३ । ।
उपात्तं च प्रकृत्यर्थो द्रव्यं एवाश्रयस्तयोः ।
सोऽयं इत्यभिसंबन्धादभेदेन प्रतीयते । । ३,१४.१६४ । ।
रूपाभेदाच्च तद्द्रव्यं आकाङ्क्षावत्प्रतीयते ।
विशेषैर्भिन्नरूपैस्तदाश्रयैरिव युज्यते । । ३,१४.१६५ । ।
भिन्नरूपेसु यल्लिङ्गं विशेषेसु व्यवस्थितम् ।
संख्या च ताभ्यां द्रव्यात्मा सोऽभिन्नो व्यपदिश्यते । । ३,१४.१६६ । ।
आश्रयः समवायि च निमित्तं लिङ्गसंख्ययोः ।
कर्तृस्थभावकः शेतिरतो भाष्य उदाहृतः । । ३,१४.१६७ । ।
निमित्तं आश्रयत्वेन गृह्येत यदि साधनम् ।
कर्मापदिष्टयोः प्राप्तिस्तत्र स्याल्लिङ्गसंख्ययोः । । ३,१४.१६८ । ।
शास्त्रे निमित्तभावेन समुदायादपोद्धृतः ।
स्त्र्यर्थस्तस्येच्छया योगः प्रकृत्या प्रत्ययेन वा । । ३,१४.१६९ । ।
स्त्रीशब्दो गुणशब्दत्वात्तुल्यधर्मा सितादिभिः ।
गुणमात्रे प्रयुज्येत संस्त्यानवति वाश्रये । । ३,१४.१७० । ।
स्त्र्यर्थः संस्त्यानवद्द्रव्यं प्रकृत्यर्थश्च यद्यसौ ।
द्रव्योपलक्षणार्थत्वं संस्त्यानस्य तथा सति । । ३,१४.१७१ । ।
संस्त्यानेन क्व चिद्द्रव्यं दृष्टं यद्युपलक्षितम् ।
अनङ्गीकृतसंस्त्यानात्तद्वृत्तेः प्रत्ययो भवेत् । । ३,१४.१७२ । ।
भूतादयः षडाख्याश्च संस्त्यानेनोपलक्षिते ।
ब्राह्मण्यादौ यदा वृत्तास्तेभ्यः स्युः प्रत्ययास्तदा । । ३,१४.१७३ । ।
तद्वन्तो हि प्रधानत्वात्प्रत्ययाणां प्रयोजकाः ।
सामानाधिकरैण्येऽपि तस्माट्टाबादिसंभवः । । ३,१४.१७४ । ।
गुणमात्राभिधायित्वं स्त्रीशब्दे वर्ण्यते यदा ।
प्रकृत्यर्थश्च संस्त्यानं स्वार्थिकाः प्रत्ययास्तदा । । ३,१४.१७५ । ।

संस्त्याने केवले वृत्तिः प्रकृतीनां न विद्यते ।
तदाविष्टे ततो द्रव्ये गृह्यन्ते समवस्थिताः । । ३,१४.१७६ । ।
उपकारि च संस्त्यानं येषु शब्देष्वपेक्षितम् ।
तेभ्यष्टाबादयस्तच्च भूतादिष्वविवक्षितम् । । ३,१४.१७७ । ।
संस्त्यानं प्रत्ययस्यार्थः शुद्धं आश्रीयते यदा ।
तदा द्विवचनानेक- प्रत्ययत्वं न सिध्यति । । ३,१४.१७८ । ।
जातिश्चेत्स्त्रीत्वं एवासौ भेदोऽन्यत्राविवक्षितः ।
यस्माद्भिन्नैरपि द्रव्यैस्तदेकं सद्विशिष्यते । । ३,१४.१७९ । ।
मात्राणां हि तिरोभावे परिमाणं न विद्यते ।
कुमार्य इति तेन स्यात्कुमार्यां भेदसंभवात् । । ३,१४.१८० । ।
जातिसंख्यासमाहारैर्यथैव सहचारिणि ।
द्रव्ये क्रियाः प्रवर्तन्त एकात्मत्वे व्यपेक्षिते । । ३,१४.१८१ । ।
मूर्तिभ्यो मूर्तिधर्माणां तथाभेदस्य दर्शनात् ।
सामानाधिकरण्यं च क्रियायोगश्च कल्पते । । ३,१४.१८२ । ।
सामानाधिकरण्ये तु मतुब्लोपादपेक्षिते ।
लुक्तद्धितलुकीति स्याल्लुक्तत्राप्युपलक्षणम् । । ३,१४.१८३ । ।
केसां चित्त्यक्तभेदेषु द्रव्येष्वेव विधीयते ।
संस्त्यानवत्सु टाबादिरभेदेन समन्वयात् । । ३,१४.१८४ । ।
सामान्यभूतो द्रव्यात्मा परिच्छिन्नपरिग्रहः ।
क्रियाभिर्युज्यते भेदैर्भागशश्चावतिष्ठते । । ३,१४.१८५ । ।
शुक्लादिष्वाश्रयद्रव्यं प्राधान्येनाभिधीयते ।
स्त्रीत्वं तु प्रत्ययार्थत्वादभिधाविषयो यतः । । ३,१४.१८६ । ।
सोऽयं इत्यभिसंबन्धादाश्रयं प्रतिपद्यते ।
स्त्रीत्वं स्वभावसिद्धो वा गुणभावविपर्ययः । । ३,१४.१८७ । ।
साकाङ्क्षत्वाद्गुणत्वेन सामान्यं वोपदिश्यते ।
व्यक्तीनां आत्मधर्मोऽसावेकप्रख्यानिबन्धनः । । ३,१४.१८८ । ।
एवम्भूता च सावस्था भागभेदपरिग्रहे ।
कृते बुद्ध्यैव भेदानां आश्रयत्वे च कल्पिते । । ३,१४.१८९ । ।
निस्कृष्टेष्वपि भेदेषु व्यक्तिरूपाश्रये ततः ।
लिङ्गप्रत्यवमर्शेन लिङ्गसंख्ये प्रपद्यते । । ३,१४.१९० । ।
अन्तरेन चशब्दस्य प्रयोगं द्वन्द्वभाविनाम् ।
अविशिष्टार्थवृत्तित्वं रूपाभेदात्प्रतीयते । । ३,१४.१९१ । ।
विकल्पवति वा वृत्तिर्निवर्त्येऽथ समुच्चिते ।
तेषां अज्ञातशक्तीनां द्योतकेन नियम्यते । । ३,१४.१९२ । ।
वृत्तौ विशिष्टरूपत्वाच्चशब्दो विनिवर्तते ।
अर्थभेदेऽपि सारूप्यात्तच्चार्थेनापदिश्यते । । ३,१४.१९३ । ।
चस्य चासत्त्वभूतोऽर्थः स एवाश्रियते यदि ।
तद्धर्मत्वं ततो द्वन्द्वे चादिष्वर्थकृतं हि तत् । । ३,१४.१९४ । ।
चार्थः शब्दे क्व चिद्भेदात्कथं चित्समवस्थितः ।
द्योतकाश्चादयस्तस्य वक्ता द्वन्द्वस्तु तद्वताम् । । ३,१४.१९५ । ।
विकल्पाद्यभिधेयस्य चार्थस्यान्यपदार्थता ।
द्योतकत्वान्न कल्पेत तस्मात्सदुपलक्ष्यते । । ३,१४.१९६ । ।
तत्र स्वाभाविकं लिङ्गं शब्दधर्मे व्यपेक्षिते ।
शब्दः कश्चित्तं एवार्थं कथं चित्प्रतिपद्यते । । ३,१४.१९७ । ।
शब्दादर्थाः प्रतायन्ते स भेदानां विधायकः ।
अनुमानं विवक्षायाः शब्दादन्यन्न विद्यते । । ३,१४.१९८ । ।
समुच्चितः स्याद्द्वन्द्वार्थो गुणभूतसमुच्चयः ।
समुच्चयो वापि भवेद्गुणभूतसमुच्चितः । । ३,१४.१९९ । ।
समुच्चितस्य प्राधान्ये लिङ्गसंख्ये स्वभावतः ।

समुच्चयस्य प्राधान्ये शास्त्रं स्यात्प्रतिपादकम् ।। ३,१४.२०० ।।
समुच्चयवतोऽर्थस्य प्राधान्येऽप्यपरे विदुः ।
निमित्तानुविधायित्वादसिद्धिं लिङ्गसंख्ययोः ।। ३,१४.२०१ ।।
समुच्चयो निमित्तं चेत्स्यान्निमित्तानुवर्तनम् ।
अन्वयव्यतिरेकाभ्यां चार्थो द्वन्द्वनिबन्धनः ।। ३,१४.२०२ ।।
समुच्चितनिमित्तत्वे चार्थस्यापगमेऽपि वा ।
स्वभावसिद्धे द्वन्द्वस्य लिङ्गसंख्ये व्यवस्थिते ।। ३,१४.२०३ ।।
पदान्तरस्थस्यार्थस्य द्योतकत्वान्न युज्यते ।
निपातो लिङ्गसंख्याभ्यां द्वन्द्वस्त्वर्थस्य वाचकः ।। ३,१४.२०४ ।।
निमित्तानुविधाने च द्रव्यधर्मानपेक्षणात् ।
गुणप्रधानभावेन क्रियायोगो न कल्पते ।। ३,१४.२०५ ।।
यस्य नास्ति क्रियायोगः स्वतन्त्रोऽसौ न विद्यते ।
अर्थो द्वन्द्वस्य तत्र स्यादुपादानं अनर्थकम् ।। ३,१४.२०६ ।।
समुच्चयवतोऽर्थस्य वाचको नानुवर्तते ।
निमित्तं अपि चास्यार्थः स्वधर्मैर्युज्यते ततः ।। ३,१४.२०७ ।।
बाह्यो नास्त्याश्रयो द्वन्द्वे विशेषौ तत्र हि श्रुतौ ।
समुच्चयस्तदाधारस्तद्धर्मैर्व्यपदिश्यते ।। ३,१४.२०८ ।।
यो वावयवभेदाभ्यां भेदवद्भ्यां इवान्वितः ।
एकः समूहो धर्मान्स भागयोः प्रतिपद्यते ।। ३,१४.२०९ ।।
एकश्च द्व्यात्मकोऽर्थोऽसौ भेदाभेदसमन्वितः ।
यौ भेदावाश्रितस्तत्स्थे लिङ्गसंख्ये प्रपद्यते ।। ३,१४.२१० ।।
यथा स्वशब्दाभिहिते चैत्रार्थे न प्रयुज्यते ।
चैत्रशब्दो बहुव्रिहावप्रयोगस्तथा भवेत् ।। ३,१४.२११ ।।
यथा गौरिति शुक्लादेरभिधानं न विद्यते ।
एवं यस्याभिसंबन्धो गोभिस्तावत्प्रतीयते ।। ३,१४.२१२ ।।
संबन्धी नियतो रूढश्चित्राणां न च विद्यते ।
गवां यथा वज्रपाणिस्त्र्यक्षे वाऽपि व्यवस्थितः ।। ३,१४.२१३ ।।
शब्दान्तरत्वाद्वाक्येषु विशेषा यद्यपि श्रुताः ।
वृत्तिशब्दोऽन्य एवायं सामान्यस्याभिधायकः ।। ३,१४.२१४ ।।
अगोरचित्रगोश्चैव रूपभेदान्निवर्तकः ।
न चित्रगुर्विशेषाणां रूपाभेदात्तु वाचकः ।। ३,१४.२१५ ।।
यथा चित्रगुरित्येतत्प्रयुक्ते न प्रयुज्यते ।
एवं यदि स्यात्सामान्यं तस्य न स्यात्प्रतिश्रुतिः ।। ३,१४.२१६ ।।
सर्वादयो विशेषास्तु प्रदेशानां निवर्तकाः ।
यथा प्रदेशाः सामान्य- प्रदेशान्तरबाधकाः ।। ३,१४.२१७ ।।
विभक्त्यर्थाभिधानाद्वा षष्ठी नानुप्रयुज्यते ।
द्रव्यस्यानभिधानात्तु तच्छब्दोऽनुप्रयुज्यते ।। ३,१४.२१८ ।।
सामानाधिकरण्यं चेन्मतुब्लोपात्प्रकल्पते ।
मतुपोऽपि तदर्थत्वादनवस्था प्रसज्यते ।। ३,१४.२१९ ।।
संबन्धस्य च संबन्दी संबन्धोऽन्यः प्रसज्यते ।
विभक्त्यर्थप्रधाने च क्रियायोगो न कल्पते ।। ३,१४.२२० ।।
विभक्त्यर्थप्रधानत्वात्ततस्तत्रेति न क्रिया ।
दृश्यादिः कर्मकर्त्रादि- निमित्तत्वाय कल्पते ।। ३,१४.२२१ ।।
अन्तर्भवेच्च संबन्धः प्राधान्याभिहितः कथम् ।
स प्रातिपदिकार्थश्च तथाभूतः कथं भत्वेत् ।। ३,१४.२२२ ।।
असंभवात्तु संबन्धे संबन्धसहचारिणि ।
जातिसंख्यासमाहार- कार्याणां इव संभवः ।। ३,१४.२२३ ।।
सोऽयं इत्यभिसंबन्धाद्विशिष्टाश्रयवाचिनाम् ।
शुक्लादिवल्लिङ्गसंख्ये शास्त्रारम्भाद्भविष्यतः ।। ३,१४.२२४ ।।

भेदेन तु विवक्षायां सामान्ये वा विवक्षिते ।
सलिङ्गस्य ससंख्यस्य पदार्थस्यागतिर्भवेत् ।। ३,१४.२२५ ।।
साधुत्वं न विभक्त्यर्थ- मात्रे वृत्तस्य दृश्यते ।
कृत्स्नार्थवृत्तेः साधुत्वं इत्यर्थग्रहणं कृतम् ।। ३,१४.२२६ ।।
सोऽयं इत्यभिसंबन्धाद्द्रव्यवृत्तिरयं यदा ।
सलिङ्गस्य ससंख्यस्य तदा साधुत्वं उच्यते ।। ३,१४.२२७ ।।
अन्तर्भूतविभक्त्यर्थे षष्ठी न श्रूयते यथा ।
तथाश्रुतिः प्रसज्येत लिङ्गसंख्याभिधायिनाम् ।। ३,१४.२२८ ।।
साधर्म्यं अव्ययेन स्याद्बहुव्रीहेस्तथा सति ।
लिङ्गसंख्यानिमित्तस्य संस्कारस्यापवर्तनात् ।। ३,१४.२२९ ।।
प्रयुक्तेन च संबन्धाच्चैत्रादिश्रवनं भवेत् ।
विना विभक्त्या संबन्धो विभक्त्या विद्यते विना ।। ३,१४.२३० ।।
अभिधानेऽपि संख्यायाः संख्यात्वं न निवर्तते ।
षष्ठ्यर्थस्याभिधाने तु स्यात्प्रातिपदिकार्थता ।। ३,१४.२३१ ।।
अनुप्रयोगसिद्ध्यर्थं न विभक्त्यर्थकल्पना ।
वस्त्वन्तरं उपक्षिप्तं इति के चित्प्रचक्षते ।। ३,१४.२३२ ।।
संबन्दिभिर्विशिष्टानां संबन्धानां निमित्तता ।
संबन्धैर्वा विशिष्टानां तद्वतां स्यान्निमित्तता ।। ३,१४.२३३ ।।
के चित्संयोगिनो दण्डाद्विषाणात्समवायिनः ।
तद्वति प्रत्ययानाहुर्बहुव्रीहिं तथैव च ।। ३,१४.२३४ ।।
भिन्नं संबन्धिभेदेन संबन्धं अपरे विदुः ।
निमित्तं स विभक्त्यर्थः समासेनाभिधीयते ।। ३,१४.२३५ ।।
प्रधानं अन्यार्थतया भिन्नं स्वैरुपसर्जनैः ।
निमित्तं अब्बिधेयं वा सर्वपश्चादपेक्ष्यते ।। ३,१४.२३६ ।।
स्वामिनि व्यतिरेकश्च वाक्ये यद्यपि दृश्यते ।
प्राधान्य एव तस्येष्टो बहुव्रीहिर्विवक्षिते ।। ३,१४.२३७ ।।
गवां विशेषणत्वेन यदा तद्वान्प्रवर्तते ।
अस्यैता इति तत्रार्थे बहुव्रीहिर्न विद्यते ।। ३,१४.२३८ ।।
यदा प्रत्यवमर्शस्तु तासां स्वामी गवां इति ।
गोभिस्तदाभिसंबन्धो निमित्तत्वाय कल्पते ।। ३,१४.२३९ ।।
अपेक्षमानः संबन्धं रूढित्वस्य निवृत्तये ।
निमित्तानुविधायित्वात्तद्धर्मार्थः प्रसज्यते ।। ३,१४.२४० ।।
नाना चित्रा इति यथा निमित्तं अनुरुध्यते ।
नानाभूतेऽपि वृत्तः सन्बहुव्रीहिस्तथा भवेत् ।। ३,१४.२४१ ।।
संबन्धिनि निमित्ते तु द्रव्यधर्मो न हीयते ।
लिङ्गाभावो हि लिङ्गस्य विरोधित्वेन वर्तते ।। ३,१४.२४२ ।।
संख्वावांल्लिङ्गवाम्श्चार्थोऽभिन्नधर्मा, निमित्ततः ।
आसन्न एव द्रव्यत्वात्तद्धर्मैर्न विरुध्यते ।। ३,१४.२४३ ।।
विभक्त्यर्थेन चाविष्टं शुद्धं चेति द्विधा स्थितम् ।
द्रव्यं शुद्धस्य यो धर्मः स न स्यादन्यधर्मणः ।। ३,१४.२४४ ।।
द्रव्यमात्रस्य निर्देशे भेदोऽयं अविवक्षितः ।
ग्रन्थे पूर्वत्र भेदस्तु द्वितीयेऽनुप्रदर्शितः ।। ३,१४.२४५ ।।
द्रव्यस्य ग्रहणं चात्र लिङ्गसंख्याविशेषणम् ।
द्रव्याश्रितत्वं हि तयोस्ततोऽन्यस्य न सिध्यतः ।। ३,१४.२४६ ।।
संबन्धिभिन्नसंबन्ध- परिछिन्ने प्रवर्तते ।
समासो द्रव्यसामान्ये विशिष्टार्थानुपातिनि ।। ३,१४.२४७ ।।
द्रव्यधर्मानतिक्रान्तो भेदधर्मेष्ववस्थितः ।
भविष्यदाश्रयापेक्षे लिङ्गसंख्ये प्रपद्यते ।। ३,१४.२४८ ।।
शास्त्रप्रवृत्तिभेदेऽपि लौकिकोऽर्थो न भिद्यते ।

नञ्समसे यतस्तत्र त्रयः पक्षा विचारिताः ।। ३,१४.२४९ ।।
शब्दान्तरेऽपि चैकत्वं आश्रित्यैवं विचारणा ।
अब्रह्मणादिषु नञः प्रयोगो न हि विद्यते ।। ३,१४.२५० ।।
प्राक्समासात्पदार्थानां निवृत्तिर्द्योत्यते नञा ।
स्वभावतो निवृत्तानां रूपाभेदादलक्षिता ।। ३,१४.२५१ ।।
ब्राह्मणादिस्थया वाक्येष्वाख्यातपदवाच्यया ।
क्रियया यस्य संबन्धो वृत्तिस्तस्य न विद्यते ।। ३,१४.२५२ ।।
पाचकादिपदस्था चेन्नञा संबध्यते क्रिया ।
तत्र सत्तानुपादानात्त्रिपक्षी नोपपद्यते ।। ३,१४.२५३ ।।
सत्तयैवाभिसंबन्धो यदि सर्वत्र कल्प्यते ।
असन्निति समासेऽस्मिन्सत्तान्या परिकल्प्यताम् ।। ३,१४.२५४ ।।
क्त्वान्ते च तुमुनन्ते च नञ्समासे न दृश्यते ।
विशेषणविशेष्यत्वं नञासत्ताभिधायिना ।। ३,१४.२५५ ।।
क्रियायाः साधनाधार- सामान्ये नञ् व्यवस्थितः ।
ततो विशिष्टैराधारैर्युज्यते ब्राह्मणादिभिः ।। ३,१४.२५६ ।।
वृत्तौ यथा गताद्यर्थं उपादाय निरादयः ।
युज्यन्ते साधनाधारैर्नञ्समासेऽपि स क्रमः ।। ३,१४.२५७ ।।
तत्रासति नञो वृत्तेर्ब्राह्मणक्षत्रियादिभिः ।
विशेषणविशेष्यत्वं कल्प्यते कुब्जखञ्जवत् ।। ३,१४.२५८ ।।
कामचारे च सत्येवं असतः स्यात्प्रधानता, ।
गुणत्वं इतरेषां च तेषां वा स्यात्प्रधानता ।। ३,१४.२५९ ।।
प्राधान्येनाश्रिताः पूर्वं श्रुतेः सामान्यवृत्तयः ।
विशेष एव प्रक्रान्ता ब्राह्मणक्षत्रिवादवः ।। ३,१४.२६० ।।
यथा गौरादिभिस्तेषां अवच्छेदो विधीयते ।
असताप्यनभिव्यक्तं तादात्म्यं व्यज्यते तथा ।। ३,१४.२६१ ।।
यथा सत्ताभिधानाय सन्नर्थः परिकल्प्यते ।
तथासत्ताभिधानाय निरुपाख्योऽपि कल्पते ।। ३,१४.२६२ ।।
क्षत्रियादौ पदं कृत्वा बुद्धिः सत्तान्तराश्रया ।
जात्या भिन्नां ततः सत्तां प्रसक्तां अपकर्षति ।। ३,१४.२६३ ।।
अभाव इति भावस्य प्रतिषेधे विवक्षिते ।
सोपाख्यत्वं अनाश्रित्य प्रतिषेधो न कल्पते ।। ३,१४.२६४ ।।
अनेकधर्मवचनाः शब्दाः सङ्घाभिधायिनः ।
एकदेशेषु वर्तन्ते तुल्यरूपाः स्वभावतः ।। ३,१४.२६५ ।।
यथैकदेशकरणात्कृत इत्वभिधीयते ।
अकृतश्चेति संघातः स एवाब्राह्मणे क्रमः ।। ३,१४.२६६ ।।
ब्राह्मणोऽब्राह्मणस्तस्मादुपन्यासात्प्रसज्यते ।
अकृते वा कृतासङ्गादविशिष्टं कृताकृतात् ।। ३,१४.२६७ ।।
अमुख्यसंभवे तत्र मुख्यस्य विनिवृत्तये ।
शास्त्रान्वाख्यानसमये नञ् प्रयुक्तो विशेषकः ।। ३,१४.२६८ ।।
पदार्थानुपघातेन दृश्यतेऽन्यविशेषणम् ।
अथ जातिमतोऽर्थस्य कश्चिद्धर्मो निवर्तितः ।। ३,१४.२६९ ।।
अवश्यं ब्राह्मणे कश्चित्क्व चिद्धर्मो न विद्यते ।
विशेषावचनात्तत्र नञः श्रुतिरनर्थिका ।। ३,१४.२७० ।।
अविशिष्टस्य पर्यायो नञ्विशिष्टः प्रसज्यते ।
अन्वाख्यानाद्धि साधुत्वं एवंभूते प्रतीयते ।। ३,१४.२७१ ।।
पदार्थानुपघातेन यद्यप्यत्र विशेषणम् ।
उपचारसतोऽर्थस्य सावस्था द्योत्यते नञा ।। ३,१४.२७२ ।।
विशेष्येषु यथाभूतः पदार्थः समवस्थितः ।
तथाभूते तथाभावो गम्यते भेदहेतुभिः ।। ३,१४.२७३ ।।

निवृत्तेऽवयवस्तस्मिन्पदार्थे वर्तते कथम् ।
नानिमित्ता हि शब्दस्य प्रवृत्तिरुपपद्यते । । ३,१४.२७४ । ।
आराच्छब्दवदेकस्य विरुद्धेऽर्थे स्वभावतः ।
शब्दस्य वृत्तिर्यद्यस्ति नञः श्रुतिरनर्थिका । । ३,१४.२७५ । ।
अथ स्वभावो वचनादन्वाख्येयत्वं अर्हति ।
तद्वाच्यं अप्रसिद्धत्वान्नञार्थो विनिवर्त्यते । । ३,१४.२७६ । ।
यद्यप्युभयवृत्तित्वं प्रधानं तु प्रतीयते ।
प्रस्थानं गम्यते शुद्धे तदर्थेऽपि न तिष्ठतौ । । ३,१४.२७७ । ।
किमर्थं अतथाभूतेऽसति मुख्यार्थसंभवे ।
भेदे ब्राह्मणशब्दस्य वृत्तिरभ्युपगम्यते । । ३,१४.२७८ । ।
अयं पदार्थ एतस्मिन्क्षत्रियादौ न विद्यते ।
इति तद्वचनः शब्दः प्रत्ययाय प्रयुज्यते । । ३,१४.२७९ । ।
बुद्धेर्विषयतां प्राप्ते शब्दादर्थे प्रतीयते ।
प्रवृत्तिर्वा निवृत्तिर्वा ग्रुत्या ह्यर्थोऽनुसज्यते । । ३,१४.२८० । ।
असम्यगुपदेशाद्वा निमित्तात्संशयस्य वा ।
शब्दप्रवृत्तिर्न त्वस्ति लोष्टादिषु विपर्ययात् । । ३,१४.२८१ । ।
अनेकस्मादस इति प्राधान्ये सति सिध्यति ।
सापेक्षत्वं प्रधानानां एवं युक्तं त्वतल्विधौ । । ३,१४.२८२ । ।
एकस्य च प्रधानत्वात्तद्विशेषणसंनिधौ ।
प्रधानधर्माव्यावृत्तिरतो न वचनान्तरम् । । ३,१४.२८३ । ।
प्रधानं अत्र भेद्यत्वादेकार्थो विकृतो नञा ।
हित्वा स्वधर्मान्वर्तन्ते द्व्यादयोऽप्येकतां गताः । । ३,१४.२८४ । ।
ब्राह्मणत्वं यथापन्ना नञ्युक्ताः क्षत्रियादयः ।
द्वित्वादिषु तथैकत्वं नञ्योगादुपचर्यते । । ३,१४.२८५ । ।
एकत्वयोगं आसाद्य स धर्मः प्रतिषिध्यते ।
द्व्यादिभ्यस्तेषु तच्छब्दो वर्तते ब्राह्मणादिवत् । । ३,१४.२८६ । ।
आविष्टसंख्यो वाक्येऽसौ यथा द्व्यादौ प्रयुज्यते ।
वृत्तौ तस्य प्रधानत्वात्सा संख्या न निवर्तते । । ३,१४.२८७ । ।
प्रतिषेध्यो यथाभूतस्तथाभूतोऽनुषज्यते ।
वचनान्तरयोगे हि न सोऽर्थः प्रतिषिध्यते । । ३,१४.२८८ । ।
अशुक्ल इति कृष्णादिर्यथार्थः संप्रतीयते ।
संख्यान्तरं तथानेक इत्यत्राप्यभिधीयते । । ३,१४.२८९ । ।
क्रियाप्रसङ्गात्सर्वेषु कर्मस्वङ्गीकृतेषु च ।
एकस्मिन्प्रतिषिद्धेऽपि प्राप्तं अन्यत्प्रतीयते । । ३,१४.२९० । ।
क्रियाश्रुतिश्च प्रक्रान्ते प्रसज्यप्रतिषेधने ।
पर्युदासे तु नियतं संख्येयान्तरं उच्यते । । ३,१४.२९१ । ।
धात्वर्थः कर्मविषयो व्यपदिष्टः स्वसाधनैः ।
अर्थात्सर्वाणि कर्माणि प्रागाक्षिप्यावतिष्ठते । । ३,१४.२९२ । ।
निर्ज्ञातसाधनाधारे यत्राख्याते प्रयुज्यते ।
अनेक इति पश्चाच्च तिष्ठतीत्यनुषज्यते । । ३,१४.२९३ । ।
साध्यत्वात्तत्र सिद्धेन क्रिया द्रव्येण लक्ष्यते ।
प्रागेवाङ्गीकृतं द्रव्यं अतः पूर्वेण भिद्यते । । ३,१४.२९४ । ।
संख्यैव प्रतिषेधेन संख्यान्तरं अपेक्षते ।
वाक्येऽपि तेन नैकत्व- मात्रं एव निवर्त्यते । । ३,१४.२९५ । ।
स्नेहान्तरादवच्छेदस्तथासत्तेः प्रतीयते ।
तैलेन भोजनेऽप्राप्ते न त्वन्यदुपसेचनम् । । ३,१४.२९६ । ।
एकार्थे वर्तमानाभ्यां असता ब्राह्मणेन च ।
यदा जात्यन्तरं बाह्यं क्षत्रियाद्यपदिश्यते । । ३,१४.२९७ । ।
श्यामेव शस्त्री कन्येति यथान्यद्व्यपदिश्यते ।

असन्ब्राह्मण इत्याभ्यां तथान्ये क्षत्रियादयः । । ३,१४.२९८ । ।
असास्नो गौरिति यथा, गवयो व्यपदिश्यते ।
जात्यन्तरं न गोरेव सस्नाभावः प्रतीयते । । ३,१४.२९९ । ।
तुल्यरूपं यथाख्यातं कण्टकैर्भेदहेतुभिः ।
खदिरं जातिभेदेन खर्जूरात्प्रतिपद्यते । । ३,१४.३०० । ।
अविद्यमानब्राह्मण्यो यादृशो ब्राह्मणो भवेत् ।
अङ्गीकृतोपमानेन तथान्योऽर्थोऽभिधीयते । । ३,१४.३०१ । ।
अवृष्टयो यथा वर्सा नीहाराभ्रसमावृताः ।
तद्रूपत्वात्स हेमन्त इत्यभिन्नः प्रतीयते । । ३,१४.३०२ । ।
अपरे ब्राह्मणादीनां सर्वेषां जातिवाचिनाम् ।
द्रव्यस्यान्यपदार्थत्वे नञा योगं प्रचक्षते । । ३,१४.३०३ । ।
न चैवंविषयः कश्चिद्बहुव्रीहिः प्रकल्पते ।
अगुरश्व इति व्याप्तिर्नञ्समासेन यस्य न । । ३,१४.३०४ । ।
द्वन्द्वैकदेशिनोरुक्ता परवल्लिङ्गता यतः ।
अवर्षासु ततोऽसिद्धिरिष्टयोर्लिङ्गसंख्ययोः । । ३,१४.३०५ । ।
विशेषणं ब्राह्मणादि क्रियासंबन्धिनोऽसतः ।
यदा विषयभिन्नं तत्तदासत्त्वं प्रतीयते । । ३,१४.३०६ । ।
ब्राह्मणत्वेन चासत्त्वादुच्यते सत्तदन्यथा ।
असदित्यपि सत्त्वेन सतः सत्ता निवर्त्यते । । ३,१४.३०७ । ।
समन्यद्रव्यवृत्तित्वान्निमित्तानुविधायिनः ।
अयोगो लिङ्गसंख्याभ्यां स्याद्वा सामान्यधर्मता । । ३,१४.३०८ । ।
प्रागसत्त्वाभिधायित्वं समासे द्रव्यवाचिता ।
निमित्तानुविधानं च न सर्वत्र स्वभावतः । । ३,१४.३०९ । ।
निमित्तानुविधाने च क्रियायोगो न कल्पते ।
तथा चाव्यपदेश्यत्वादुपादानं अनर्थकम् । । ३,१४.३१० । ।
असत्सामान्यवृत्तिर्वा विशेषैः क्षत्रियादिभिः ।
प्रयुक्तैराश्रयैर्भिन्नो याति तल्लिङ्गसंख्यताम् । । ३,१४.३११ । ।
प्रागाश्रयो हि भेदाय प्रधानेऽभ्यन्तरीकृतः ।
पुनः प्रत्यवमर्शेन विभक्त इव दृश्यते । । ३,१४.३१२ । ।
समासे श्रूयते स्वार्थो येन तद्वांस्तदाश्रयः ।
द्रव्यं तु लिङ्गसंख्यावदसताभ्यन्तरीकृतम् । । ३,१४.३१३ । ।
एकार्थविषयौ शब्दौ तस्मिन्नन्यार्थवर्तिनौ ।
असतैव तु भेदानां सर्वेषां उपसंग्रहः । । ३,१४.३१४ । ।
ते क्षत्रियादिभिर्वाच्या वाच्या वा सर्वनामभिः ।
यान्तीवान्यपदार्थत्वं नञो रूपाविकल्पनात् । । ३,१४.३१५ । ।
विशेषस्याप्रयोगे तु लिङ्गसंख्ये न सिध्यतः ।
अवर्षादिषु दोसश्च हेमन्तोऽन्याश्रयो यतः । । ३,१४.३१६ । ।
आकृतिः सर्वशब्दानां यदा वाच्या प्रतीयते ।
एकत्वादेकशब्दत्वं न्याय्यं तस्याश्च वर्ण्यते । । ३,१४.३१७ । ।
आविष्टलिङ्गता तस्यां स्याद्ग्राम्यपगुसङ्घवत् ।
द्रव्यभेदेऽपि चैकत्वात्तत्रैकवचनं भवेत् । । ३,१४.३१८ । ।
आश्रयाणां हि लिङ्गैः सा नियतैरेव युज्यते ।
तथा च युक्तवद्भावे प्रतिषेधो निरर्थकः । । ३,१४.३१९ । ।
सर्वत्राविष्टलिङ्गत्वं लोकलिङ्गपरिग्रहे ।
विरोधित्वात्प्रसज्येत नाश्रितं तच्च लौकिकम् । । ३,१४.३२० । ।
सामान्यं आकृतिर्भावो जातिरित्यत्र लौकिकम् ।
लिङ्गं न संभवत्येव तेनान्यत्परिगृह्यते । । ३,१४.३२१ । ।
प्रवृत्तिरिति सामान्यं लक्षणं तस्य कथ्यते ।
आविर्भावस्तिरोभावः स्थितिश्चेत्यथ भिद्यते । । ३,१४.३२२ । ।

प्रवृत्तिमन्तः सर्वेऽर्थास्तिसृभिश्च प्रवृत्तिभिः ।
सततं न वियुज्यन्ते वाचश्चैवात्र संभवः । । ३,१४.३२३ । ।
यश्चाप्रवृत्तिधर्मार्थश्चितिरूपेण गृह्यते ।
अनुयातीव सोऽन्येषां प्रवृत्तीर्विश्वगाश्रयाः । । ३,१४.३२४ । ।
तेनास्य चितिरूपं च चितिकालश्च भिद्यते ।
तस्य स्वरूपभेदस्तु न कश्चिदपि विद्यते । । ३,१४.३२५ । ।
अचेतनेषु चैतन्यं संक्रान्तं इव दृश्यते ।
प्रतिबिम्बकधर्मेण यत्तच्छब्दनिबन्धनम् । । ३,१४.३२६ । ।
अवस्था तादृशी नास्ति या लिङ्गेन न युज्यते ।
क्व चित्तु शब्दसंस्कारो लिङ्गस्यानाश्रये सति । । ३,१४.३२७ । ।
कृत्तद्धिताभिधेयानां भावानां न विरुध्यते ।
शास्त्रे लिङ्गं गुणावस्था तथा चाकृतिरिष्यते । । ३,१४.३२८ । ।
लिङ्गं प्रति न भेदोऽस्ति द्रव्यपक्षेऽपि कश्चन ।
तस्मात्सप्त विकल्पा ये सैवात्राविष्टलिङ्गता । । ३,१४.३२९ । ।
वचने नियमः शास्त्राद्द्रव्यस्याभ्युपगम्यते ।
यतस्तदाकृतौ शास्त्रं अन्यथैव समर्थ्यते । । ३,१४.३३० । ।
वर्तते यो बहुष्वर्थोऽभेदे तस्य विवक्षिते ।
स्वाश्रयैर्व्यपदिष्टस्य शास्त्रे वचनं उच्यते । । ३,१४.३३१ । ।
यदा त्वाश्रयभेदेन भेद एव प्रतीयते ।
आकृतेर्द्रव्यपक्षेन तदा भेदो न विद्यते । । ३,१४.३३२ । ।
अभेदे त्वेकशब्दत्वाच्छास्त्राच्च वचने सति ।
एकशेषो न वक्तव्यो वचनानां च संभवः । । ३,१४.३३३ । ।
ननु चानभिधेयत्वे द्रव्यस्य तदपाश्रयः ।
आकृतेरुपकारोऽयं द्रव्याभावान्न कल्पते । । ३,१४.३३४ । ।
व्यपदेशोऽभिधेयेन न शास्त्रे कश्चिदाश्रितः ।
द्रव्यं नाम पदार्थो यो न च स प्रतिषिध्यते । । ३,१४.३३५ । ।
गुणभावोऽभिधेयत्वं प्रति द्रव्यस्य नाश्रितः ।
उपकारि गुणः शेषः परार्थ इति कल्पना । । ३,१४.३३६ । ।
द्रव्ये न गुणभावोऽस्ति विनाद्रव्याभिधायिताम् ।
आकृतौ वा प्रधानत्वं अत एवं समर्थ्यते । । ३,१४.३३७ । ।
कैश्चिद्गुणप्रधानत्वं नामाख्यातवदिष्यते ।
न वृत्तिवत्परार्थस्य गुणभावस्तु वर्ण्यते । । ३,१४.३३८ । ।
गुणभूतस्य नानात्वादाकृतेरेकशब्दता ।
सिद्धो वचनभेदश्च द्रव्यभेदसमन्वयात् । । ३,१४.३३९ । ।
साधनं गुणभावेन क्रियाया भेदकं यथा ।
आख्यातेष्वेकशब्दाया जातेर्द्रव्यं तथोच्यते । । ३,१४.३४० । ।
एकत्वे तुल्यरूपत्वाच्छब्दानां प्रतिपादने ।
निमित्तात्तद्वतोऽर्थस्य विशिष्टग्रहणे सति । । ३,१४.३४१ । ।
सोऽयं इत्यभिसंबन्धादाश्रयैराकृतेः सह ।
प्रवृत्तौ भिन्नशब्दायां लिङ्गसंख्ये प्रसिध्यतः । । ३,१४.३४२ । ।
प्राक्च जात्यभिसंबन्धात्सर्वनामाभिधेयता ।
वस्तूपलक्षणं सत्त्वे प्रयुज्यन्ते त्यदादयः । । ३,१४.३४३ । ।
पाकौ पाका इति यथा भेदकः कैश्चिदाश्रयः ।
इष्यते चानुपादानो धर्मोऽसौ गुणवाचिनाम् । । ३,१४.३४४ । ।
आश्रयस्यानुपादाने केवलं लभते यदि ।
आधारधर्मान्सामान्यं पुरस्तात्तद्विचारितम् । । ३,१४.३४५ । ।
जातौ पूर्वं प्रवृत्तानां शब्दानां जातिवाचिनाम् ।
अशब्दवाच्यात्संबन्धाद्व्यक्तिरप्युपजायते । । ३,१४.३४६ । ।
सोऽयं इत्यभिसंबन्धाज्जातिधर्मोपचर्यते ।

द्रव्यं तदाश्रयो भेदो जातेश्चाभ्युपगम्यते । । ३,१४.३४७ । ।
मञ्चशब्दो यथाधेयं मञ्चेष्वेव व्यवस्थितः ।
तत्त्वेनाह तथा जाति- शब्दो द्रव्येषु वर्तते । । ३,१४.३४८ । ।
तत्र जातिपदार्थत्वं तथैवाभ्युपगम्यते ।
जातिरुत्सृष्टसंख्या तु द्रव्यात्मन्यनुषज्यते । । ३,१४.३४९ । ।
अस्येदं इति वा यत्र सोऽयं इत्यपि वा श्रुतिः ।
वर्तते परधर्मेण तदन्यदभिधीयते । । ३,१४.३५० । ।
यत्प्रधानं न तस्यास्ति स्वरूपं अनिरूपनात् ।
गुणस्य चात्मना द्रव्यं तद्भावेनोपलक्ष्यते । । ३,१४.३५१ । ।
गुणस्य भेदकाले तु प्राधान्यं उपजायते ।
संसर्गश्रुतिरर्थेषु साक्षादेव न वर्तते । । ३,१४.३५२ । ।
जातौ वृत्तो यदा द्रव्ये स शब्दो वर्तते पुनः ।
जातेरेव पदार्थत्वं न तदाभ्युपगम्यते । । ३,१४.३५३ । ।
प्रवृत्तानां पुनर्वृत्तिरेकत्वेनोपवर्ण्यते ।
प्रतिपत्तेरुपायेषु न तत्त्वं अनुगम्यते । । ३,१४.३५४ । ।
अपृथक्शब्दवाच्यस्य जातिराश्रीयते यदा ।
द्रव्यस्य सति संस्पर्शे तदा जातिपदार्थता । । ३,१४.३५५ । ।
द्रव्यस्य सति संस्पर्शे द्रव्यं आश्रीयते यदा ।
वाच्यं तेनैव शब्देन तदा द्रव्यपदार्थता । । ३,१४.३५६ । ।
अपृथक्शब्दवाच्यापि भेदमात्रे प्रवर्तते ।
यदा संबन्धवज्जातिः सापि द्रव्यपदार्थता । । ३,१४.३५७ । ।
अत्यन्तभिन्नयोरेव जातिद्रव्याभिधायिनोः ।
अवाच्यस्योपकारित्व आश्रिते तूभयार्थता । । ३,१४.३५८ । ।
आश्रिते त्वाश्रयकृतं भेदं अभ्युपगच्छता ।
पुनश्चाप्येकशब्दत्वं जातिशब्देऽनुवर्णितम् । । ३,१४.३५९ । ।
अनिर्जातस्य निर्ज्ञानं येन तन्मानं उच्यते ।
प्रस्थादि तेन मेयात्मा साकल्येनावधार्यते । । ३,१४.३६० । ।
अनिर्ज्ञातं प्रसिद्धेन येन तद्धर्म गम्यते ।
साकल्येनापरिज्ञानादुपमानं तदुच्यते । । ३,१४.३६१ । ।
द्वयोः समानयोर्धर्म उपमानोपमेययोः ।
समास उपमानानां शब्दैस्तदभिधायिभिः । । ३,१४.३६२ । ।
आधारभेदाद्भेदो यः श्यामत्वे सोऽविवक्षितः ।
गुणोऽसावाश्रितैकत्वो भिन्नाधारः प्रतीयते । । ३,१४.३६३ । ।
गुणयोर्नियतो भेदो गुणजातेस्तथैकता ।
एकत्वेऽत्यन्तभेदे वा, नोपमानस्य संभवः । । ३,१४.३६४ । ।
जातिमात्रव्यपेक्षायां उपमार्थो न कश्चन ।
श्यामत्वं एकं गुणयोरुभयोरपि वर्तते । । ३,१४.३६५ । ।
येनैव हेतुना श्यामा शस्त्री तत्र प्रतीयते ।
स हेतुर्देवदत्तायाः प्रत्यये न विशिष्यते । । ३,१४.३६६ । ।
आश्रयाद्यो गुणे भेदो जातेर्या चाविशिष्टता ।
ताभ्यां उभाभ्यां द्रव्यात्मा सव्यापारः प्रतीयते । । ३,१४.३६७ । ।
सोऽयं एकत्वनानात्वे व्यवहारः समाश्रितः ।
भेदाभेदविमर्शेन व्यतिकीर्णेन वर्तते । । ३,१४.३६८ । ।
श्यामेत्येवाभिधियेत जातिमात्रे विवक्षिते ।
शस्त्र्यादिनां उपादाने तत्र नास्ति प्रयोजनम् । । ३,१४.३६९ । ।
अशब्दवाच्यो यो भेदः श्याममात्रे न वर्तते ।
श्यामेषु केषु चिद्वृत्तिर्यस्य सोऽत्र व्यपेक्ष्यते । । ३,१४.३७० । ।
श्यामेषु केषु चित्किं चित्किं चित्सर्वत्र वर्तते ।
सामान्यं कश्चिदेकस्मिन्त्र् छ्यामे भेदो व्यवस्थितः । । ३,१४.३७१ । ।

तथा हि सति सौरभ्ये भेदो जात्युत्पलादिषु ।
गन्धानां सति भेदे तु सादृश्यं उपलभ्यते । । ३,१४.३७२ । ।
गुणानां आश्रयाद्भेदः स्वतो वाप्यनुगम्यते ।
अनिर्देश्याद्विशेषाद्वा संकराद्वा गुणान्तरैः । । ३,१४.३७३ । ।
उपमानं प्रसिद्धत्वात्सर्वत्र व्यतिरिच्यते ।
उपमेयत्वं आधिक्ये साम्ये वा न निवर्तते । । ३,१४.३७४ । ।
अन्यैस्तु मानं जात्यादि भेद्यस्यार्थस्य वर्ण्यते ।
अनिर्ज्ञातस्वरूपो हि ज्ञेयोऽर्थस्तेन मीयते । । ३,१४.३७५ । ।
मितस्तु स्वेन मानेन प्रसिद्धो यो गुणाश्रयः ।
आश्रयान्तरमानाय स्वधर्मेण प्रवर्तते । । ३,१४.३७६ । ।
रूपान्तरेण संस्पर्शो रूपान्तरवतां सताम् ।
भिन्नेन यस्य भेद्यानां उपमानं तदुच्यते । । ३,१४.३७७ । ।
धर्मः समानः श्यामादिरुपमानोपमेययोः ।
आश्रियमानप्राधान्यो धर्मेणान्येन भिद्यते । । ३,१४.३७८ । ।
शस्त्रीकुमार्योः सदृशः श्याम इत्येवं आश्रिते ।
व्यपदेश्यं अनेनेति निमित्तं गुणयोः स्थितम् । । ३,१४.३७९ । ।
यदा निमित्तैस्तद्वन्तो गच्छन्तीव तदात्मताम् ।
भेदाश्रयं तदाख्यानं उपमानोपमेययोः । । ३,१४.३८० । ।
तत्त्वासङ्गविवक्षायां येषु भेदो निवर्तते ।
लुप्तोपमानि तान्याहुस्तद्धर्मेण समाश्रयात् । । ३,१४.३८१ । ।
शस्त्र्यां प्रसिद्धं श्यामत्वं मानं सा तेन मीयते ।
अन्या श्यामा तु तद्रूपा तेनात्यन्तं न मीयते । । ३,१४.३८२ । ।
शस्त्रिं स्वेन गुणेनातो मिमानां आश्रयान्तरम् ।
असमाप्तगुणं सिद्धेरुपमानं प्रचक्षते । । ३,१४.३८३ । ।
उपमेये स्थितो धर्मः श्रुतोऽन्यत्रानुमीयते ।
श्रुतोऽथ वोपमानस्थ उपमेयेऽनुमियते । । ३,१४.३८४ । ।
अधीयते ब्राह्मणवत्क्षत्रिया इति दृश्यते ।
उपमेयस्य भिन्नत्वाद्वचनं क्षत्रियाश्रयम् । । ३,१४.३८५ । ।
साधारणं ब्रुवन्धर्म क्व चिदेव व्यवस्थितम् ।
सामान्यवचनः शब्द इति सूत्रेऽपदिश्यते । । ३,१४.३८६ । ।
नाभेदेन न भेदेन गुणो द्विष्ठोऽभिधीयते ।
भिन्नयोर्धर्मयोरेकः श्रूयतेऽन्यः प्रतीयते । । ३,१४.३८७ । ।
नात्यन्ताय मिमीते यत्सामान्ये समवस्थितम् ।
सादृश्यादुपमेयार्थ- समीपे परिकल्प्यते । । ३,१४.३८८ । ।
मानं प्रति समीपं वा सादृश्येन प्रतीयते ।
परिच्छेदाद्धि सादृश्यं इह मानोपमानयोः । । ३,१४.३८९ । ।
एकजातिव्यपेक्षायां तदेवेत्यवसीयते ।
भेदस्यैव व्यपेक्षायां अन्यदेवेति गम्यते । । ३,१४.३९० । ।
कर्मत्वं करणत्वं च भेदेनैवाश्रितं यतः ।
अत्यन्तैकत्वविषयो न स्यात्तेनात्र सम्शयः । । ३,१४.३९१ । ।
भेदेऽपि तुल्यरूपत्वाच्छालीमं तानिति दृश्यते ।
जात्यभेदात्स एवायं इति भिन्नोऽभिधीयते । । ३,१४.३९२ । ।
कथं ह्यवयवोऽन्यस्य स्यादन्य इति चोच्यते ।
अत्यन्तभेदे नानात्वं यत्र तत्त्वं न विद्यते । । ३,१४.३९३ । ।
अभेदस्य विवक्षायां एकत्वं सङ्घसङ्घिनोः ।
सङ्घिनोर्न त्वभेदोऽस्ति तथान्यत्वं उदाहृतम् । । ३,१४.३९४ । ।
तत्राभिन्नव्यपेक्षायां उपमार्थो न विद्यते ।
यो हि गौरिति विज्ञाने हेतुः सोऽस्ति गवान्तरे । । ३,१४.३९५ । ।
व्यावृत्तानां विशेषाणां व्यापारे तु विवक्षिते ।

न कश्चिदुपकारोऽस्ति बुद्धेर्बुद्ध्यन्तरं प्रति । । ३,१४.३९६ । ।
किं चिद्यत्रास्ति सामान्यं यदि भेदाश्च के चन ।
गोत्वं गोष्वस्ति सामान्यं भेदाश्च शबलादयः । । ३,१४.३९७ । ।
सामान्यं श्यामतान्यैव तद्धि साधारणं द्वयोः ।
तदेव सिद्ध्यसिद्धिभ्यां भेद इत्यपदिश्यते । । ३,१४.३९८ । ।
श्यामत्वं एव सामान्यं अन्येषां उभयोः स्थितम् ।
संपूर्नत्वात्तदन्यस्माद्विशेष इति गम्यते । । ३,१४.३९९ । ।
आकृतौ वापि सामान्ये क्व चिदेव व्यवस्थिताः ।
श्यामादौ येऽवसीयन्ते विशेषास्त इहाश्रिताः । । ३,१४.४०० । ।
जातेरभेदे भेदे वा सादृश्यं तत्प्रचक्षते ।
कश्चित्कदा चितर्थात्मा तथाभूतोऽपदिश्यते । । ३,१४.४०१ । ।
यत्रार्थे प्रत्ययाभेदो न कदा चिद्विकल्पते ।
अविद्यमानभेदत्वात्स एक इति गम्यते । । ३,१४.४०२ । ।
योऽर्थ आश्रितनानात्वः स एवेत्यपदिश्यते ।
व्यापारं जातिभागस्य तत्रापि प्रतिजानते । । ३,१४.४०३ । ।
जातिभागाश्रया प्रख्या तत्राभिन्ना प्रवर्तते ।
व्यक्तिभागाश्रया बुद्धिस्तत्र भेदेन जायते । । ३,१४.४०४ । ।
अन्यत्र वर्तमानं सद्भेदाभेदसमन्वितम् ।
निमित्तं पुनरन्यत्र नानात्वेनेव गृह्यते । । ३,१४.४०५ । ।
आधारेषु पदन्यासं कृत्वोपैति तदाश्रयम् ।
स सादृश्यस्य विषय इत्यन्यैरपदिश्यते । । ३,१४.४०६ । ।
परापेक्षे यथा भावे कारणाख्या प्रवर्तते ।
तथान्याधिगमापेक्षं उपमानं प्रचक्षते । । ३,१४.४०७ । ।
गुरुगिश्यपितापुत्र- क्रियाकालादयो यथा ।
व्यवहारास्तथौपम्यं अप्यपेक्षानिबन्धनम् । । ३,१४.४०८ । ।
श्यामत्वं उपमाने चेद्वृत्तं वृत्तौ प्रयुज्यते ।
उपमेयं समासेन बाह्यं तत्राभिधीयते । । ३,१४.४०९ । ।
टाबन्त एव चैत्रादौ श्यामाशब्दस्तथा भवेत् ।
सूत्रे च प्रथमाभावान्न श्यामाद्युपसर्जनम् । । ३,१४.४१० । ।
अथ त्वेकविभक्तित्वाद्गुणत्वाद्वोपसर्जनम् ।
नैवं तित्तिरिकल्माष्यां इष्टः स्त्रीप्रत्ययो भवेत् । । ३,१४.४११ । ।
सतिशिष्टबलीयस्त्वाद्बाह्ये ङिषि च सत्यपि ।
उपमानस्वरो न स्यात्तस्मात्स्त्र्यन्तः समस्यते । । ३,१४.४१२ । ।
गुणे न चोपमानस्थे सापेक्षत्वं प्रकल्पते ।
प्रधानस्य तथा न स्याद्व्याघ्रादौ लिङ्गदर्शनम् । । ३,१४.४१३ । ।
तस्मात्सति गुणत्वेऽपि प्राधान्यं विग्रहान्तरे ।
नैवंजातीयकं शास्त्रे संभवत्युपसर्जनम् । । ३,१४.४१४ । ।
उपमेयात्मनि श्यामो वर्तमानोऽभिधीयते ।
उपमानेष्वनिर्दिष्टः सामर्थ्यात्स प्रतीयते । । ३,१४.४१५ । ।
द्रव्यमात्रेऽपि निर्दिष्टे चन्द्रवक्त्रेऽनुगम्यते ।
विशिष्ट एव चन्द्रस्थो गुणो नोपप्लवादयः । । ३,१४.४१६ । ।
भेदभावनयैतच्च समासेऽप्युपवर्ण्यते ।
विशिष्टगुणभिन्नेऽर्थे पदं अन्यत्प्रयुज्यते । । ३,१४.४१७ । ।
यदि भिन्नाधिकरणो वचनादनुगम्यते ।
मृगीव चपलेत्यत्र पुंवद्भावो न सिध्यति । । ३,१४.४१८ । ।
अस्त्रीपूर्वपदत्वात्तु पुंवद्भावो भविष्यति ।
यथैव मृगदुग्धादौ न चेत्स्त्र्यर्थो विवक्ष्यते । । ३,१४.४१९ । ।
शस्त्रीव शस्त्रीश्यामेति देवदत्तैव कथ्यते ।
तस्यां एवोभयं तस्मादुच्यते शास्त्रविग्रहे । । ३,१४.४२० । ।

पुंवद्भावस्य सिद्ध्यर्थं पक्षे स्त्रीप्रत्ययस्य च ।
बह्वपेक्ष्यं अतस्तस्यां उभयप्रतिपादनम् ।। ३,१४.४२१ ।।
श्यामा शस्त्री यथा श्यामा शस्त्रीकल्पेति चोच्यते ।
तत्रोपमानेतरयोः श्यामेत्येतदपेक्ष्यते ।। ३,१४.४२२ ।।
अथ श्यामेव शस्त्रीयं श्यामेत्येवं प्रयुज्यते ।
शस्त्री यथेयं श्यामेति तावदेव प्रतीयते ।। ३,१४.४२३ ।।
उपलक्षणमात्रार्था गुणस्यास्य यदि श्रुतिः ।
पृथग्द्वयोः श्रुतोऽप्येष नेष्टस्वार्थस्य वाचकः ।। ३,१४.४२४ ।।
उपमेयं तु यद्वाच्यं तस्य चेत्प्रतिपादने ।
सव्यापारा गुणास्तत्र सर्वस्योक्तिः सकृच्छ्रुतौ ।। ३,१४.४२५ ।।
प्रकाराधारभेदेन विशेषे समवस्थितः ।
शब्दान्तराभिसंबन्धे सामान्यवचनः कथम् ।। ३,१४.४२६ ।।
सादृश्यमात्रं सामान्यं द्विष्ठं कैश्चित्प्रतीयते ।
गुणो भेदेऽप्यभेदेन द्विवृत्तिर्वा विवक्षितः ।। ३,१४.४२७ ।।
व्यापारो जातिभागस्य द्रव्ययोर्वाभिधित्सितः ।
रूपात्सामान्यवाचित्वं प्राग्वा वृत्तेरुदाहृतम् ।। ३,१४.४२८ ।।
व्याघ्रशब्दो यदा शौर्यात्पुरुषार्थेऽवतिष्ठते ।
तदाधिकरणाभेदात्समासस्यास्ति संभवः ।। ३,१४.४२९ ।।
शूरशब्दप्रयोगे तु व्याघ्रशब्दो मृगे स्थितः ।
भिन्नेऽधिकरणे वृत्तेस्तत्र नैवास्ति संभवः ।। ३,१४.४३० ।।
सामानाधिकरण्येऽपि गुणभेदस्य संभवात् ।
प्रयोगः शूरशब्दस्य समासेऽप्यनुषज्यते ।। ३,१४.४३१ ।।
पूजोपाधिश्च यो दृष्टः कुत्सनोपाधयश्च ये ।
तेषां भिन्ननिमित्तत्वान्नियमार्था पुनः श्रुतिः ।। ३,१४.४३२ ।।
असंभवेऽपि वा वृत्तेः स्यादेतल्लिङ्गदर्शनम् ।
अच्वेरिति यथा लिङ्गं अभावेऽपि भृशादिषु ।। ३,१४.४३३ ।।
वत्यन्तावयवे वाक्ये यदौपम्यं प्रतीयते ।
तत्प्रत्ययविधौ सूत्रे निर्देशोऽयं विचार्यते ।। ३,१४.४३४ ।।
क्रियेत्युपाधिः प्राथम्यात्प्रकृत्यर्थस्य यद्यपि ।
न प्रातिपदिकं तत्र क्रियावाच्युपपद्यते ।। ३,१४.४३५ ।।
सत्त्ववृत्तस्य शेषे वा तृतीया साधनेऽपि वा ।
तिङां असत्त्ववाचित्वादुभयं तन्न विद्यते ।। ३,१४.४३६ ।।
पाकादयस्तृतीयान्ताः सत्त्वधर्मसमन्वयात् ।
न क्रियेत्यपदिश्यन्ते कृत्वोऽर्थप्रत्यये यथा ।। ३,१४.४३७ ।।
ये चाव्ययकृतः के चित्क्रियाधर्मसमन्विताः ।
तेषां असत्त्ववाचित्वं तिङन्तैर्न विशिष्यते ।। ३,१४.४३८ ।।
कृत्वसुज्विषया यापि शयितव्यादिषु क्रिया ।
उपमानोपमेयत्वं तत्रात्यन्तं असंभवि ।। ३,१४.४३९ ।।
न केवलौ द्रव्यगुणौ तद्वान्वाप्युपमीयते ।
शयितव्यादिभिस्तेषु नोपमार्थोऽस्ति कश्चन ।। ३,१४.४४० ।।
उपमानोपमेयत्वे द्रव्ये चानुक्तधर्मिणि ।
निमित्तत्वेन गम्यन्ते रूढयोगाः क्रियागुणाः ।। ३,१४.४४१ ।।
होतव्यसदृशो होतेत्यत्राप्यर्थो न विद्यते ।
विरोधात्क्रियया तस्मात्क्रियावान्नोपमीयते ।। ३,१४.४४२ ।।
क्रिया समानजातिया तद्भावान्नोपमीयते ।
जातिभेदेऽपि पाकेन भिन्नाः पाकादयः क्रियाः ।। ३,१४.४४३ ।।
आधारभेदाद्भिन्नायां उपमानस्य संभवः ।
अध्येतव्येन विप्राणां तुल्यं अध्ययनं विशाम् ।। ३,१४.४४४ ।।
अर्थात्प्रकरणाद्वापि यत्रापेक्ष्यं प्रतीयते ।

सामर्थ्यादनपेक्षस्य तस्य वृत्तिः प्रसज्यते । । ३,१४.४४५ । ।
तैलपाकेन तुल्ये च घृतपाके विवक्षिते ।
क्रियावदपि कार्याणां दर्शनात्प्रत्ययो भवेत् । । ३,१४.४४६ । ।
अतिङ्ग्रहणं एवं तु समासस्य निवर्तकम् ।
गमनं कारकस्येति ण्वुल्यन्यस्मिन्न संभवेत् । । ३,१४.४४७ । ।
सर्वस्य परिहारार्थं समुदायत्वं आश्रितम् ।
शुद्धायाः संभवान्न स्यात्क्रियाया ब्राह्मणादिषु । । ३,१४.४४८ । ।
उपमानविवक्षायां स्वधर्मश्च निवर्तते ।
क्रियाया न श्रुताद्यस्मादुपमानं समाप्यते । । ३,१४.४४९ । ।
तृतीयोऽप्याश्रितो भेदो धर्मः साधारणो द्वयोः ।
व्यापारवान्न कृत्स्नस्य साम्यं कृत्स्नेन विद्यते । । ३,१४.४५० । ।
द्रव्ये वापि क्रियायां वा निमित्तात्तत्प्रकल्पते ।
क्रियाणां विद्यमानत्वाद्वृत्तिर्न स्याद्गवादिषु । । ३,१४.४५१ । ।
अभावात्केवलायास्तु तद्वानर्थः प्रतीयते ।
प्रधानासंभवे युक्ता लक्षणार्था क्रियाश्रुतिः । । ३,१४.४५२ । ।
क्रियान्तरेषु सापेक्षाः क्रियाशब्दाः क्रियान्तरे ।
उपकाराय गृह्यन्ते यथैव ब्राह्मणादयः । । ३,१४.४५३ । ।
यथा प्रकर्षः सर्वत्र निमित्तान्तरहेतुकः ।
द्रव्यवद्गुणशब्देऽपि स निमित्तं अपेक्षते । । ३,१४.४५४ । ।
यो य उच्चार्यते शब्दः स स्वरूपनिबन्धनः ।
यथा तथोपमानेषु व्यपेक्ष न निवर्तते । । ३,१४.४५५ । ।
क्रियावृत्तेस्तृतीयान्तस्य- ऐवं चासंभवे सति ।
प्रसिद्धन्यायकरणो भाष्ये युजिरुदाहृतः । । ३,१४.४५६ । ।
अन्तर्भूते तु करणे प्रयोगो न पुनर्भवेत् ।
न्यायेनायुक्तं इत्यत्र जीवतौ प्राणकर्मवत् । । ३,१४.४५७ । ।
शास्त्राभ्यासाच्च भेदोऽयं अयुक्तं इति वर्ण्यते ।
अशोभनं असंबद्धं इति रूढिर्व्यवस्थिता । । ३,१४.४५८ । ।
विविभक्तिः प्रकृत्यर्थं प्रत्युपाधिः कथं भवेत् ।
विभक्तिपरिणामे च प्रकल्प्यं विषयान्तरम् । । ३,१४.४५९ । ।
विभक्त्यन्तरयोगो हि यस्य तद्विषयान्तरे ।
विभक्त्यन्तरसंबन्धः सामर्थ्यादनुमीयते । । ३,१४.४६० । ।
सारूप्यात्तु तदेवेदं इति तत्रोपचर्यते ।
शब्दान्तरं विभक्त्या तु युक्तं शास्त्रे तदश्रुतम् । । ३,१४.४६१ । ।
प्रकृतिश्चेत्तृतीयान्ता तेनेत्यस्मात्प्रतीयते ।
क्रियेति प्रथमान्ता सा कथं भवितुं अर्हति । । ३,१४.४६२ । ।
क्रिययेति तृतीया च प्रयोगे कस्य कल्प्यताम् ।
तेनेत्यस्य हि संबन्धः सूत्रस्थेन न विद्यते । । ३,१४.४६३ । ।
सोपस्कारेषु सूत्रेषु वाक्यशेषः समर्थ्यते ।
तेन यत्तत्तृतीयान्तं क्रिया चेत्सेति गम्यते । । ३,१४.४६४ । ।
उपाधेः कस्य चिद्वाक्ये प्रयोग उपलभ्यते ।
प्रतीयमानधर्मान्यो न कदा चित्प्रयुज्यते । । ३,१४.४६५ । ।
नीलं उत्पलं इत्यत्र न विशेष्ये न भेदके ।
कश्चित्तद्धर्मवचनो वाक्ये शब्दः प्रयुज्यते । । ३,१४.४६६ । ।
अत्यन्तानुगमात्तत्र न सूत्रे न च विग्रहे ।
विभक्तिपरिणामेन किं चिदस्ति प्रयोजनम् । । ३,१४.४६७ । ।
तृतीयान्तं क्रियेत्येतद्विग्रहे न प्रयुज्यते ।
यथा दण्डः प्रहरणं क्रीडायां इति दृश्यते । । ३,१४.४६८ । ।
घविधौ यच्च संज्ञायां इति सूत्र उदाहृतम् ।
उपादानं प्रयोगेषु तस्यात्यन्तं न विद्यते । । ३,१४.४६९ । ।

यैरप्रयुक्तैः संस्कारः प्रधानेषु प्रतीयते ।
ते भेदेऽपि विभक्तीनां निर्दिश्यन्त उपाधयः । । ३,१४.४७० । ।
समुदायेषु वर्तन्ते भावानां सहचारिणाम् ।
शब्दास्तत्त्वविवक्षायां समुच्चयविकल्पयोः । । ३,१४.४७१ । ।
समुच्चयस्तु क्रियते येषु प्रत्यर्थवृत्तिषु ।
भेदाधिष्ठानया योगस्तेसां भवति संख्यया । । ३,१४.४७२ । ।
सर्वैर्विशिष्टास्तैरर्थैर्जन्यन्ते सहचारिभिः ।
बुद्धयः प्रतिपत्तॄणां शब्दार्थांस्तानतो विदुः । । ३,१४.४७३ । ।
संसृष्टाः प्रत्ययेष्वर्थाः सर्व एवोपकारिनः ।
तेषां प्रत्ययरूपेण सर्वेषां शब्दवाच्यता । । ३,१४.४७४ । ।
केवलानां तु भावानां न रूपं अवधार्यते ।
अनिरूपितरूपेषु तेषु शब्दो न वर्तते । । ३,१४.४७५ । ।
पूर्वशब्दप्रयोगाच्च समूहान्न निवर्तते ।
वर्ततेऽवयवे नापि नोपात्तं त्यजते क्व चित् । । ३,१४.४७६ । ।
समुदायाभिधायि च यदि भेदं विशेषयेत् ।
तत्रातुल्यविभक्तित्वं पूर्वकायादिवद्भवेत् । । ३,१४.४७७ । ।
समूहे च प्रदेशे च पञ्चाला इति दृश्यते ।
तथा विशेषणं सर्व इत्येतदुपपद्यते । । ३,१४.४७८ । ।
तथार्धपिप्पलीत्यत्र जात्यन्तरनिवृत्तये ।
अर्धं च पिप्पली चेति खन्दे शब्दः प्रतीयते । । ३,१४.४७९ । ।
पञ्चालानां प्रदेशोऽपि भिन्नो जनपदान्तरात् ।
तत्रान्यस्य निवृत्त्यर्थे शब्दे भेदो न गम्यते । । ३,१४.४८० । ।
प्रसिद्धास्तु विशेषेण समुदाये व्यवस्थिताः ।
प्रदेशे दर्शनं तेषां अर्थप्रकरणादिभिः । । ३,१४.४८१ । ।
यदुपव्यञ्जनं जातेः सहचारि च कर्मसु ।
तत्र वा रूढसंबन्धं यत्प्रायेणोपलक्षितम् । । ३,१४.४८२ । ।
समुदायः प्रदेशो वेत्येवं तस्मिन्ननाश्रिते ।
अर्थात्मन्यविशेषेण वर्तन्ते ब्राह्मणादयः । । ३,१४.४८३ । ।
यश्च तुल्यश्रुतिर्दृष्टः समुदाये व्यवस्थितः ।
तेनोपचरितैकत्वं प्रदेशेऽप्युपलभ्यते । । ३,१४.४८४ । ।
संस्कारादुपघाताद्वा वृत्तोऽक्तपरिमाणके ।
तैलादौ जातिशब्दोऽत्र सामर्थ्यादवसीयते । । ३,१४.४८५ । ।
न जातिगुणशब्देषु मूर्तिभेदो विवक्षितः ।
ते जातिगुणसंबन्ध- भेदमात्रनिबन्धनाः । । ३,१४.४८६ । ।
कृष्णादिव्यपदेशश्च सर्वावयववृत्तिभिः ।
गुणैस्तेऽप्येकदेशस्थाः पटादीनां विशेषकाः । । ३,१४.४८७ । ।
पटावयववृत्तास्तु यदा तत्र पटादयः ।
तदा तैलादिवत्तेषां जातिशब्दत्वं उच्यते । । ३,१४.४८८ । ।
निवृत्त्यर्था श्रुतिर्येषां भेदस्तेष्वनपेक्षितः ।
प्रदेशे समुदाये वा गुणोऽन्येषां निवर्तकः । । ३,१४.४८९ । ।
ब्राह्मणाध्ययने तत्र वर्तते ब्राह्मणश्रुतिः ।
सादृश्यं तत्र दृष्टं हि क्षत्रियाध्ययनादिभिः । । ३,१४.४९० । ।
ब्राह्मणाध्ययने वृत्तिर्यदि स्याद्ब्राह्मणश्रुतेः ।
वक्तव्यं केन धर्मेण तुल्यत्वं क्रिययोरिति । । ३,१४.४९१ । ।
अध्येतरि यदा वृत्तिरुच्यते ब्राह्मणश्रुतेः ।
निमित्तत्वं तदोपैति क्रियैवाध्येतरि स्थिता । । ३,१४.४९२ । ।
सिम्हशब्देन संबन्धे गौर्यमात्राभिधायिना ।
चैत्रात्षष्ठी प्रसज्येत योगे शत्र्यादिभिर्यथा । । ३,१४.४९३ । ।
ब्राह्मणायेव दातव्यं वैश्यायेत्येवमादिषु ।

संप्रदानादियोगश्च क्रियामात्रे न कल्पते । । ३,१४.४९४ । ।
क्रियामात्राभिधायित्वादव्ययेषु वतेर्न च ।
पाठः कदा चित्कर्तव्यस्तुल्यौ पक्षावुभौ यतः । । ३,१४.४९५ । ।
जहाति जातिं द्रव्यं वा तस्मान्नावयवे स्थितः ।
क्रियायास्तु श्रुतिर्यस्मात्तद्वत्यर्थेऽवतिष्ठते । । ३,१४.४९६ । ।
अक्रियाणां निवृत्त्यर्था, यतश्चात्र क्रियाश्रुतिः ।
क्रियोपलक्षिते तस्मात्क्रियाशब्दः प्रतीयते । । ३,१४.४९७ । ।
होतव्यादिषु यस्माच्च क्रियान्या ब्राह्मणादिवत् ।
अपेक्षणीया शुद्धेऽर्थे तस्माद्वृत्तिर्न कस्य चित् । । ३,१४.४९८ । ।
सर्वं वाप्येकदेशो वा यस्मिन्नाश्रियते क्व चित् ।
विशेषवृत्तिं तं सर्वं आहुर्भेदे व्यवस्थितम् । । ३,१४.४९९ । ।
समुच्चयो विकल्पो वा प्रकाराः सर्व एव वा ।
विशेषा इति वर्ण्यन्ते सामान्यं वाविकल्पितम् । । ३,१४.५०० । ।
न हि ब्राह्मण इत्यत्र भेदः कश्चिदपाश्रितः ।
अपाकृतो वा तेनायं समुदाये व्यवस्थितः । । ३,१४.५०१ । ।
क्रिया त्वाश्रीयते यस्मिन्स भेदोऽध्यवसीयते ।
तथान्यथा सर्वथा चेत्यप्रयोगे न विद्यते । । ३,१४.५०२ । ।
उपमाने क्रियावृत्तिं उपमेये क्रियाश्रुतिः ।
प्रत्याययन्ती भेदस्य करोतीव पदार्थताम् । । ३,१४.५०३ । ।
व्यापारेणैव सादृश्ये व्यापारस्य विवक्षिते ।
क्रियावद्वचनाच्छब्दात्प्रत्ययः प्रतिपाद्यते । । ३,१४.५०४ । ।
क्रियावतोऽपि सादृश्ये वक्तुं इष्टे क्रियावता ।
अध्येता ब्राह्मण इव प्रत्ययो न निवर्तते । । ३,१४.५०५ । ।
अधीते तुल्य इत्येवं पुंल्लिङ्गेन विशेषणम् ।
क्रियावति क्रियायां तु तुल्यशब्दे नपुंसकम् । । ३,१४.५०६ । ।
प्रकृत्यर्थे विशिष्टेऽपि प्रत्ययार्थाविशेषणात् ।
पुत्रेण तुल्यः कपिल इति वृत्तिः प्रसज्यते । । ३,१४.५०७ । ।
याः पुत्रे रूढसंबन्धाः क्रिया लोके विवक्षिताः ।
ताभिः क्रियावतः पुत्राद्गुणतुल्ये वतिर्भवेत् । । ३,१४.५०८ । ।
अन्तर्भूतं निमित्तं च रूढिशब्देषु यद्यपि ।
क्रियास्तु सहचारिण्यो रूढाः सन्ति पदार्थवत् । । ३,१४.५०९ । ।
क्रमं तु यदि बाधित्वा प्रत्ययार्थविशेषणम् ।
प्रधानानुग्रहात्साम्याद्विभक्तेश्चावतिष्ठते । । ३,१४.५१० । ।
प्रकृतेरविशिष्टत्वात्क्रियातुल्ये प्रसज्यते ।
पुत्रादौ गुणशब्देभ्यः पूर्वोक्तस्य विपर्यये । । ३,१४.५११ । ।
स्थूलेन तुल्यो यातीति बहिरङ्गा क्रियाश्रुतिः ।
अनिमित्तं वतेस्तुल्यं यातीत्यत्रेष्यते वतिः । । ३,१४.५१२ । ।
द्वयं विशेष्यते तेन यदेकत्र विशेषणम् ।
तुल्यशब्दो हि तं धर्मं उभयस्थं अपेक्षते । । ३,१४.५१३ । ।
एकः समानो धर्मश्चेदुपमानोपमेययोः ।
तुलया संमितं तुल्यं इति तत्रोपपद्यते । । ३,१४.५१४ । ।
सूत्रे श्रुतश्च द्विष्ठोऽसावभेदेन प्रतीयते ।
न च सामान्यशब्दत्वादश्रुता गम्यते क्रिया । । ३,१४.५१५ । ।
अश्रुताश्च प्रतीयन्ते निदेशस्थायितादयः ।
ये धर्मा नियतास्तेषां पुत्रादिषु न विद्यते । । ३,१४.५१६ । ।
अनाश्रितक्रियस्तस्मान्न तुल्योऽस्ति क्रियावता ।
क्रियायाः श्रवणे सापि क्रियावत्ता प्रतीयते । । ३,१४.५१७ । ।
द्वयोः प्रतिविधानाच्च ज्यायस्त्वं अभिधीयते ।
नित्यासत्त्वाभिधायित्वात्प्रत्ययार्थविशेषणे । । ३,१४.५१८ । ।

असत्त्वभूतो व्यापारः केवलः प्रत्यये यतः ।
विद्यते लक्षणार्थत्वं नास्ति तेन क्रियाश्रुतेः । । ३,१४.५१९ । ।
क्रियावतस्तु ग्रहणात्प्रकृत्यर्थविशेषणे ।
क्रियामात्रेन तुल्यत्वे सिद्धासत्त्वाभिधायिता । । ३,१४.५२० । ।
यदा क्रियानिमित्तं तु सादृश्यं स्यात्क्रियावतोः ।
क्रियावतोऽभिधेयत्वात्तदा द्रव्याभिधायिता । । ३,१४.५२१ । ।
अव्ययेषु वतेः पाठः कार्यस्तत्र स्वरादिवत् ।
ब्राह्मणेन समोऽध्येतेत्यत्र च प्रत्ययो भवेत् । । ३,१४.५२२ । ।
सामानाधिकरण्यं च वत्यर्थेनापदिश्यते ।
तुल्यं इत्यन्यथा कल्प्यो वाक्यशेषोऽश्रुतो भवेत् । । ३,१४.५२३ । ।
क्रियावतोश्च सादृश्ये प्रत्ययार्थविशेषणे ।
अध्येत्रा सदृशोऽध्येतेत्यत्र नास्ति वतेर्विधिः । । ३,१४.५२४ । ।
तुल्यार्थैरिति या तस्यास्तृतीयाया न भिद्यते ।
अर्थो भेदेऽपि सर्वाभिरितराभिर्विभक्तिभिः । । ३,१४.५२५ । ।
भोज्यते ब्राह्मण इव तुल्यं भुक्तं द्विजातिना ।
पश्यति ब्राह्मणं इव तुल्यं विप्रेण पश्यति । । ३,१४.५२६ । ।
ब्राह्मणेनेव विज्ञातं तुल्यं ज्ञातं द्विजातिना ।
दीयतां ब्राह्मणायेव तुल्यं विप्रेण दीयताम् । । ३,१४.५२७ । ।
ब्राह्मणादिव वैश्यात्त्वं अधीष्वाध्ययनं बहु ।
इत्येवमादिभिर्भेदस्तृतीयाया न कश्चन । । ३,१४.५२८ । ।
तुल्यं मधुरयाधीये मात्रा तुल्यं स्मरामि ताम् ।
मधुरायाश्च मातुश्च कथं सादृश्यकल्पना । । ३,१४.५२९ । ।
मधुराविषयः पाठः स्मरणं मातृकर्मकम् ।
मधुरामातृशब्दाभ्यां अभेदेनाभिधीयते । । ३,१४.५३० । ।
उष्ट्रावयवतुल्येषु मुखेषूष्ट्रश्रुतिर्यथा ।
वर्तते गृहतुल्ये च प्रासादे मधुराश्रुतिः । । ३,१४.५३१ । ।
यथाध्ययनयोः साम्यं अध्येत्रोरपदिश्यते ।
तथा क्रियागतैर्धर्मैरुच्यन्ते साधनाश्रयाः । । ३,१४.५३२ । ।
इवार्थे यच्च वचनं पूर्वसूत्रे च यो विधिः ।
क्रियाशब्दश्रुतौ भेदो न कश्चिद्विद्यते तयोः । । ३,१४.५३३ । ।
यद्यप्युपाधिरन्यत्र नियतो न प्रयुज्यते ।
रूपाभेदात्त्वनिर्ज्ञाता क्रियात्र श्रूयते पुनः । । ३,१४.५३४ । ।
यथा व्युत्परयः पुच्छौ क्यङन्ते सुदुरादयः ।
सत्यपि प्रत्ययार्थत्वे भेदाभावादुदाहृताः । । ३,१४.५३५ । ।
एवं च सति पूर्वेण सिद्धोऽत्रापि वतेर्विधिः ।
नियमे वाभिधाने वा भिद्यते न क्रियाश्रुतिः । । ३,१४.५३६ । ।
इवे द्रव्यादिविषयः प्रत्ययः पुनरुच्यते ।
क्रियाणां एव सदृश्वे पूर्वसूत्रे विधीयते । । ३,१४.५३७ । ।
मधुरायां इव गृहा ब्राह्मणस्येव पाण्डुराः ।
इत्यत्र द्रव्यगुणयोः पूर्वेण न वतिर्भवेत् । । ३,१४.५३८ । ।
आरम्भस्याक्रियार्थत्वे नार्थो योगेन विद्यते ।
ऋते क्रियाया ग्रहणात्पूर्वयोगेन सिध्यति । । ३,१४.५३९ । ।
मधुरावयवे वृत्तिर्व्याख्याता मधुराश्रुतेः ।
ब्राह्मणावयवान्दन्तान्वक्ष्यति ब्राह्मणश्रुतिः । । ३,१४.५४० । ।
न का चिदिवयोगे तु बाह्यात्संबन्धिनो ।
षष्ठी विधीयते तत्र पूर्वेण प्रत्ययो भवेत् । । ३,१४.५४१ । ।
आधिक्यं तुल्यशब्देन संबन्ध उपजायते ।
षष्ठीतृतीये तत्र स्तस्तुल्यशब्दो हि वाचकः । । ३,१४.५४२ । ।
इवशब्दप्रयोगे तु बाह्यात्संबन्धिनो विना ।

नाधिक्यं उपमानेऽस्ति द्योतकः स प्रयुज्यते । । ३,१४.५४३ । ।
इवे यो व्यतिरेकोऽत्र स प्रासादादिहेतुकः ।
तुल्ये तद्विषयापेक्षं आधिक्यं उपजायते । । ३,१४.५४४ । ।
गवयेन समोऽनद्वानिति वृत्तिस्तथा भवेत् ।
न त्वस्ति गौरिवेत्यत्र व्यतिरेक इवाश्रयः । । ३,१४.५४५ । ।
उपमेयेन संबन्धात्प्राक्प्रासादादिहेतुके ।
व्यतिरेके वतेर्भावो न तुल्यार्थत्वहेतुके । । ३,१४.५४६ । ।
इवशब्देन संबन्धे न तृतीया विधीयते ।
प्रकृतां तां अतस्त्यक्त्वा विभक्त्यन्तरं आश्रितम् । । ३,१४.५४७ । ।
सप्तम्यपि न तत्रास्ति ज्ञापकार्था तु सा कृता ।
इष्टा सा शेषविषये नियतासु विभक्तिषु । । ३,१४.५४८ । ।
यदि तु व्यतिरेकेण विषयेऽस्मिन्विभक्तयः ।
प्रवर्तेरंस्तृतीयैव व्यभिचारं प्रदर्शयेत् । । ३,१४.५४९ । ।
व्यभिचारे तथा सिद्धे सप्तमीग्रहणाद्विना ।
सप्तम्येवोच्यते सर्वा न सन्त्यन्या विभक्तयः । । ३,१४.५५० । ।
अत्यन्तं अत्र विषये सप्तम्या ज्ञापकार्थया ।
बाधिता विनिवर्तेत षष्ठी सा गृह्यते पुनः । । ३,१४.५५१ । ।
पूर्वाभ्यां एव योगाभ्यां विग्रहान्तरकल्पनात् ।
अर्हार्थेऽपि वतिः सिद्धः स त्वेकेन निदर्श्यते । । ३,१४.५५२ । ।
तेन तुल्यं इति प्राप्ते क्रियोपाधिः प्रसिध्यति ।
राजवद्वर्तते राजेत्यत्र भेदे विवक्षिते । । ३,१४.५५३ । ।
राजत्वेन प्रसिद्धा ये पृथुप्रभृतयो नृपाः ।
युधिष्ठिरान्तास्तेऽन्येषां उपमानं महीक्षिताम् । । ३,१४.५५४ । ।
सिद्ध्यसिद्धिकृतो भेद उपमानोपमेययोः ।
सर्वत्रैव यतोऽसिद्धं प्रसिद्धेनोपमीयते । । ३,१४.५५५ । ।
राजवद्रूपं अस्येति राजन्येव विवक्षिते ।
अक्रियार्थेन योगेन द्वितीयेन भविष्यति । । ३,१४.५५६ । ।
उपमानाविवक्षायां नियमार्थोऽयं उच्यते ।
धर्मोऽर्हतिक्रियाकर्ता तदर्थं वचनं पुनः । । ३,१४.५५७ । ।
कृतहस्तवदित्येतत्प्रसिद्धेष्वेव दृश्यते ।
राजत्वेन प्रसिद्धे च राज्ञि राजवदित्यपि । । ३,१४.५५८ । ।
अराज्ञि येषां धर्माणां दृष्टोऽत्यन्तं असंभवः ।
ते राजनि नियम्यन्ते त्यज्यन्ते व्यभिचारिणः । । ३,१४.५५९ । ।
अर्हतेश्च क्रिया कर्त्री या तस्यां वतिरिष्यते ।
राजानं अर्हति च्छत्त्रं इति न त्वेवमादिषु । । ३,१४.५६० । ।
प्रयुक्तानां हि शब्दानां शास्त्रेणानुगमः सताम् ।
छत्त्राद्यर्थे तु वचने प्रत्याख्यानं न संभवेत् । । ३,१४.५६१ । ।
तदर्हं इति नारब्धं सूत्रं व्याकरणान्तरे ।
संभवत्युपमात्रापि भेदस्य परिकल्पनात् । । ३,१४.५६२ । ।
एकस्य कार्यनिर्ज्ञानात्सिद्धस्य विषयान्तरे ।
तद्धर्मत्वविवक्षायां बुद्ध्या भेदः प्रकल्प्यते । । ३,१४.५६३ । ।
सूत्रारम्भान्न चैतस्मादिवशब्दस्य विद्यते ।
प्रयोगः सोऽपि चैतस्य विषये विद्यते वतेः । । ३,१४.५६४ । ।
दस्युहेन्द्र इवेत्येतदैन्द्रमन्त्रे प्रयुज्यते ।
अन्यत्र दृष्टकर्मेन्द्रो यथेत्यस्मिन्विवक्षिते । । ३,१४.५६५ । ।
पूर्वां अवस्थां आश्रित्य यावस्था व्यपदिश्यते ।
सदृशस्त्वं तवैवेति तत्रैवं अभिधीयते । । ३,१४.५६६ । ।
प्रसिद्धभेदं यत्रान्यदुपमानं न विद्यते ।
उपमेयस्य तत्रात्मा स्वबुद्ध्या प्रविभज्यते । । ३,१४.५६७ । ।

योऽपि स्वाभाविको भेदः सोऽपि बुद्धिनिबन्धनः ।
तेनास्मिन्विषये भिन्नं अभिन्नं वा न विद्यते । । ३,१४.५६८ । ।
अङ्गदी कुण्डली चेति दर्शयन्भेदहेतुभिः ।
चैत्रं ईदृशं इत्याह बुद्ध्यवस्थापरिग्रहात् । । ३,१४.५६९ । ।
एतैः शब्दैर्यथाभूतः प्रत्ययात्मोपजायते ।
तत्प्रत्ययानुकारेण विषयोऽप्युपपद्यते । । ३,१४.५७० । ।
बुद्ध्यवस्थाविभागेन भेदकार्यं प्रतीयते ।
जन्यन्त इव शब्दानां अर्थाः सर्वे विवक्षया । । ३,१४.५७१ । ।
तथाविधेऽपि बाह्येऽर्थे भिद्यन्ते यत्र बुद्धयः ।
न तत्र कश्चित्सादृश्यं सदपि प्रतिपद्यते । । ३,१४.५७२ । ।
अत्यन्तं विषये भिन्ने यावत्प्रख्या न भिद्यते ।
न तावत्प्रत्यभिज्ञानं कस्य चिद्विनिवर्तते । । ३,१४.५७३ । ।
अयं एव तु सूत्रेण भेदो भेदेन दर्शितः ।
प्रसिद्धं अपि दुर्ज्ञानं अबुधः प्रतिपद्यते । । ३,१४.५७४ । ।
वैयाकरणवद्ब्रूते न वैयाकरणः सदा ।
वैयाकरणवद्ब्रूष्वेत्यतः सोऽप्यभिधीयते । । ३,१४.५७५ । ।
के चित्पुमांसो भाषन्ते स्त्रीवत्पुंवच्च योषितः ।
व्यभिचारे स्वधर्मोऽपि पुनस्तेनोपदिश्यते । । ३,१४.५७६ । ।
सदृशस्त्वं तवैवेति लोके यदभिधीयते ।
उपमानान्तरं तत्र प्रसक्तं विनिवर्तते । । ३,१४.५७७ । ।
युक्तं औपयिकं राज्ञ इत्यर्थस्य निदर्शने ।
उपमानाविवक्षायां तदर्हं इति पठ्यते । । ३,१४.५७८ । ।
प्रसक्तानुप्रसक्तस्तु वतिशेषोऽभिधीयते ।
उपमानाभिसंबन्धादस्मिन्वतिरुदाहृतः । । ३,१४.५७९ । ।
प्रधानकल्पनाभावे गुणशब्दस्य दर्शनात् ।
उपसर्गाद्वतौ सिद्धा धातौ धात्वर्थकल्पना । । ३,१४.५८० । ।
स्वं रूपं इति चैतस्मिन्नर्थस्यापि परिग्रहः ।
रूपवज्ज्ञापितस्तस्मादासन्नोऽर्थो ग्रहीष्यते । । ३,१४.५८१ । ।
धात्वर्थेनोपजनितं साधनत्वेन साधनम् ।
धातुना कृतं इत्येवं अस्मिन्सूत्रे प्रतीयते । । ३,१४.५८२ । ।
यः शब्दश्चरितार्थत्वादत्यन्तं न प्रयुज्यते ।
विषयेऽदर्शनात्तत्र लोपस्तस्याभिधीयते । । ३,१४.५८३ । ।
क्रियायां साधने द्रव्ये प्रादयो ये व्यवस्थिताः ।
तेभ्यः सत्त्वाभिधायिभ्यो वतिः स्वार्थे विधीयते । । ३,१४.५८४ । ।
प्रत्ययेन विना प्रादिस्तत्रार्थे न प्रयुज्यते ।
भेदेन तु समाख्याने विभागः परिकल्पितः । । ३,१४.५८५ । ।
अनङ्गीकृतसत्त्वं तु यदि गृह्येत साधनम् ।
विभक्तिभिर्नियोगः स्याद्यथैव तसिलादिषु । । ३,१४.५८६ । ।
पाठाद्यैरविभक्तित्वं वत्यन्तेष्वनुगम्यते ।
तेषां उद्वत इत्यत्र वक्तव्या सविभक्तिता । । ३,१४.५८७ । ।
वत्यर्थं नावगाहेते पुंवदित्यस्य दर्शनात् ।
नञ्स्नञावपवादस्य बाधकं तन्निपातनम् । । ३,१४.५८८ । ।
एतं उत्क्रामतो नूनं वत्यर्थं नञ्स्नञाविति ।
तयोः प्रवृत्तावुत्सर्गो बाधनान्नोपपद्यते । । ३,१४.५८९ । ।
नञ्स्नञौ विहितौ येन स योगो नावगाहते ।
वतिप्रकरणं तद्धि लिङ्गं एवं समर्थ्यते । । ३,१४.५९० । ।
अभेदेनोपमानस्य भिन्नार्थोपनिपातिता ।
ऊहस्तथोपमानानां अङ्गवन्नोपलभ्यते । । ३,१४.५९१ । ।
गावेधुके चरौ दृष्टा गोविकर्ताक्षवापयोः ।

पशू रुद्र इव ह्येतावित्येकवचनश्रुतिः ।। ३,१४.५९२ ।।
उपमानस्य भेदाच्च बहुषु स्यादञो विधिः ।
काश्यपा इति लोपः स्यात्तथा प्रतिकृतिष्वपि ।। ३,१४.५९३ ।।
एवं तु युक्तवद्भावादत्रैकवचनं भवेत् ।
लुं मनुष्ये तथोक्तं स्याल्लिङ्गस्यैकस्य सिद्धये ।। ३,१४.५९४ ।।
उपमेयेषु भिन्नेषु किं चिदेकं प्रवर्तते ।
प्रत्ययस्य विधौ तत्र नित्यं युक्तवदिष्यते ।। ३,१४.५९५ ।।
यदा प्रत्युपमेयं तु तदेकैकं अवस्थितम् ।
तदा बाह्यार्थभेदेन तद्धितान्तं प्रचीयते ।। ३,१४.५९६ ।।
यथा समूहप्रचये द्विगूनां भिन्नसंख्यता ।
पञ्चपूल्यादिषु तथा लुबन्तप्रचयो भवेत् ।। ३,१४.५९७ ।।
प्रचये भिद्यमाने तु संख्या पूलेषु भिद्यते ।
अर्थभेदो लुबन्तेषु नैवं कश्चन दृश्यते ।। ३,१४.५९८ ।।
येषूपमेयवचनः शब्दोऽन्यो न प्रयुज्यते ।
उपमानस्य तत्रान्यैः संख्याया भेद इष्यते ।। ३,१४.५९९ ।।
यथा गुडतिलादीनां प्रयोगादेकसंख्यता ।
पाकादेरप्रयोगे तु भिन्ना संख्याभिधीयते ।। ३,१४.६०० ।।
यः संबन्धिगतो भेदः स प्रयोगे प्रतीयते ।
संबन्धिनां अतो भेद उपमेये न गम्यते ।। ३,१४.६०१ ।।
तस्मात्सामान्यशब्दत्व- प्रसङ्गविनिवृत्तये ।
उपमेयगतो भेद उपमानेषु दृश्यते ।। ३,१४.६०२ ।।
उपमानं समस्तानां अभिन्नं श्रूयते क्व चित् ।
भिन्नानां उपमेयनां एकैकं वोपमीयते ।। ३,१४.६०३ ।।
यथा गरुड इत्येतद्व्यूहापेक्षं प्रयुज्यते ।
एकेन यत्र सादृश्यं वैनतेयेन हस्तिनाम् ।। ३,१४.६०४ ।।
एकस्यापि प्रतीयेत भिन्ना प्रतिकृतिः सह ।
काश्यपस्येति तेनायं प्रत्येकं अवतिष्ठते ।। ३,१४.६०५ ।।
मेघाः शैल इवेत्युक्ते समस्तानां प्रतीयते ।
सादृश्यं गिरिणैकेन प्रत्येकं तेन भिद्यते ।। ३,१४.६०६ ।।
छापेक्षा तद्विषयता विधेयत्वान्न गम्यते ।
काकतालीयं इत्यत्र प्रसिद्धं ह्युपलक्षणम् ।। ३,१४.६०७ ।।
राजाश्वादिश्च विषयः स्यादन्यो वेत्यनिश्चितम् ।
तेन च्छस्य विधानात्प्राग्व्यपदेशो न विद्यते ।। ३,१४.६०८ ।।
द्वयोरिवार्थयोरत्र निमित्तत्वं प्रतीयते ।
एकेनावयवो युक्तः प्रत्ययोऽन्येन युज्यते ।। ३,१४.६०९ ।।
चैत्रस्य तत्रागमनं काकस्यागमनं यथा ।
दस्योरभिनिपातस्तु तालस्य पतनं यथा ।। ३,१४.६१० ।।
संनिपाते तयोर्यान्या क्रिया तत्रोपजायते ।
वधादिरुपमेयेऽर्थे तया छविधिरिष्यते ।। ३,१४.६११ ।।
क्रियायां समवेतायां द्रव्यशब्दोऽवतिष्ठते ।
पातागमनयोः काक- तालशब्दौ तथा स्थितौ ।। ३,१४.६१२ ।।
यदन्वाख्यायकं वाक्यं तदेवं परिकल्प्यते ।
प्रयोगवाक्वं यल्लोके तदेवं न प्रयुज्यते ।। ३,१४.६१३ ।।
ययोरतर्किता प्राप्तिर्दृश्यते काकतालवत् ।
तयोः समासप्रकृतेर्वृत्तिरभ्युपगम्यते ।। ३,१४.६१४ ।।
काकस्य तालेन यथा वधो यस्य तु दस्युना ।
तत्र चित्रीकृतेऽन्यस्मिन्नुपमेये छ इष्यते ।। ३,१४.६१५ ।।
चञ्चत्प्रकारश्चञ्चत्को बृहत्क इति चापरे ।
मणिमड्डूकखद्योतान्सादृश्वेन प्रचक्षते ।। ३,१४.६१६ ।।

तत्रोन्मेषनिमेषाभ्यां खद्योत उपमीयते ।
श्वासप्रबन्धैर्मण्डूकः स्पन्दमानप्रभो मणिः ।। ३,१४.६१७ ।।
प्रविकासिप्रभोऽल्पोऽपि महान्य उपलभ्यते ।
बृहत्क इति तत्रैष मणौ शब्दः प्रयुज्यते ।। ३,१४.६१८ ।।
सादृश्यं एव सर्वत्र प्रकारः कैश्चिदिष्यते ।
भेदेऽपि तु प्रकाराख्या कैश्चिदभ्युपगम्यते ।। ३,१४.६१९ ।।
प्रकारवचनः कश्चित्प्रकारवति संस्थितः ।
प्रकारमात्रे वर्तित्वा कश्चित्तद्वति वर्तते ।। ३,१४.६२० ।।
सादृश्यग्रहणं सूत्रे सदृशस्योपलक्षणम् ।
तुल्ययोरव्ययीभावे सहशब्दोऽभिधायकः ।। ३,१४.६२१ ।।
विप्सासादृश्ययोर्वृत्तिर्या यथार्थाभिधायिनः ।
स चायं अव्ययीभावे भेदो भेदेन दर्शितः ।। ३,१४.६२२ ।।
सादृश्यं योग्यता कैश्चिदनावभ्युपगम्यते ।
यत्तु मूर्तिगतं साम्यं तत्सहेनाभिधीयते ।। ३,१४.६२३ ।।
इत्थंभावेऽपि सादृश्यं बुद्ध्यवस्थानिबन्धनम् ।
ग्रहणे भेदमात्रस्य तत्रान्यैवाभिधीयते ।। ३,१४.६२४ ।।
गौर्वाहीक इति द्वित्वे सादृश्यं प्रत्युदाहृतम् ।
शुक्लादौ सति निष्पन्ने वाहीको न द्विरुच्यते ।। ३,१४.६२५ ।।

इति भर्तृहरिकृतं वाक्यपदीयं समाप्तं